ध्यानने उपयोगी उपस्कार—मैत्र्यादि चार भावनाओ. १६-२०
ध्यान. २१
आज्ञाध्यान. २२-२३
अपायध्यान. २४-२९
विपाकध्यान. ३०-३३
संस्थानध्यान. ३४-३५
( ३५ मा श्लोकना विवरणमां पिंडस्थ आदि चार ध्यानोनुं स्वरूप. )
धर्मध्याननुं पारलौकिक फळ. ३६
शुक्लध्यान अने कैवल्य. ३७
( शुक्लध्यान अने उपशमश्रेणी-क्षपकश्रेणीनुं निरूपण. )

## सप्तम—प्रकरण.

## ( योगश्रेणी )

विषय. श्लोक.
पातंजलयोगनी आलोचना. १-३
योगपद्धतिनी पांच श्रेणीओ ४
इच्छायोग. ५
शास्त्रयोग. ६
सामर्थ्ययोग. ७-१२
( ८-९ मा श्लोकोना विवरणमां मतिज्ञानादि पांच ज्ञानोनुं निरूपण अने क्षयोपशमनी व्याख्या. )
मोक्ष. १३-१६
( मोक्षनुं शाश्वतत्व. सर्व कर्मोनो क्षय होइ शके छे. केवळ-ज्ञाननी साबिती. मुक्ति अने तेना साधनना संबन्धमां विचार. )
मुक्तिने प्राप्त थयेला केवा छे ? १७
ईश्वरोपासनानी उत्कृष्टता. १८-१९
( स्याद्वाददृष्टिए ईश्वरनुं स्वरूप, स्याद्वाद सप्तभंगी, नय, पांच कारणोनो समवाय अने जैनदर्शननी उदारता. )

## અષ્ટમ—પ્રકરણ.

### ( અન્તિમશિક્ષા. )


| વિષય. | શ્લોક. |
| --- | --- |
| ધ્રુષ્ટબિન્દુ | ૧ |
| ધ્રુષ્ટબિન્દુની સાધના. | ૨–૩ |
| દરેક યથાશક્તિ ઉન્નતિ મેળવવાને લાયક છે. | ૪–૯ |
| નવયુગના મોહકરૂપ તરફ મુગ્ધ નહિ થઇ જવાની સાવચેતી. | ૧૦–૧૩ |
| ઉપસંહાર | ૧૪ |
| ગ્રન્થના સમ્બન્ધમાં ગ્રંથકારનો ઉદ્ગાર. | ૧૫ |

# अध्यात्मतत्त्वालोकः ।



## ( मूलग्रन्थः । )



अध्यात्मपीयूषमनक्षगम्यं पीत्वा कणेहत्य विषं निजघ्नुः ।
अनादिकर्मप्रचयात्मकं ये त्रिधा प्रवन्दे परमात्मनस्तान् ॥१॥

हतं हहा ! शास्त्रविशारदत्वमनर्थहेतुश्च वचःपटुत्वम् ।
विज्ञानवेत्तृत्वमपार्थकं च नाऽऽस्वादितोऽध्यात्मसुधारसश्चेत् ॥२॥

ज्ञानस्य भक्तेस्तपसः क्रियायाः प्रयोजनं खल्विदमेकमेव ।
चेतःसमाधौ सति कर्मलेपविशोधनादात्मगुणप्रकाशः ॥३॥

ध्यानं च मौनं च तपः क्रिया च नाध्यात्ममार्गाभिमुखीभवेच्चेत् ।
न तर्हि कल्याणनिबन्धनं स्याद् युक्ता हि लक्ष्याभिमुखी प्रवृत्तिः॥४॥

द्वीपं पयोधौ फलिनं मरौ च दीपं निशायां शिखिनं हिमे च ।
कलौ कराले लभते दुरापमध्यात्मतत्त्वं बहुभागधेयः ॥ ५ ॥

जरा जराया मरणं च मृत्योः सर्वापदानामपि राजयक्ष्मा ।
जन्मद्रुबीजाग्निरनन्तविद्यानिदानमध्यात्ममहोदयश्रीः ॥ ६ ॥

तेऽपि प्रचण्डा मदनस्य बाणाश्छिद्राकुलं यैः क्रियते तपोऽपि ।
अध्यात्मवर्माऽपिहिते तु चित्ते निःसंशयं कुण्ठततां भजन्ते ॥७॥

अध्यात्मधाराधरसन्निपाते मनोमरौ पुष्यति योगबीजम् ।
पुण्याङ्कुरा निर्भरमुल्लसन्ति सर्वत्र शान्तिः प्रसरीसरीति ॥८॥

अध्यात्मभानौ प्रसरत्प्रतापे मनोनगर्यां परिभासमाने।
कुतस्तमः ?, शुष्यति भोगपङ्कः, कषायचौरैः प्रपलाय्यते च ॥९॥

आनन्दपूर्णां च सुधां समाधिं वितन्वतेऽध्यात्मसुधाकराय।
स्पृहा यदीये हृदि नाविरासीत् पशुर्नृरूपेण स मोघजन्मा ॥१०॥

योऽध्यात्मशस्त्रं वहते प्रतीक्ष्णं भवेद् भयं तस्य कुतस्त्रिलोक्याम् ?।
तिरस्कृतो वा नितरां स्तुतो वा नाध्यात्मविद् रुष्यति मोदते च ११॥

विधाय पापान्यतिभीषणानि येऽनन्तदुःखातिथयो बभूवुः।
एतादृशानप्युदधीधरद् यत् किं वर्ण्यतेऽध्यात्मरसायनं तत् ? ॥१२॥

आत्मस्वरूपस्थितचित्तवृत्तेर्भवप्रपञ्चेषु तटस्थदृष्टेः।
अध्यात्मराजेश्वरसुप्रसादे का न्यूनता सिद्धिषु लब्धिषु स्यात्? ॥१३॥

आत्माऽस्ति कर्माऽस्ति परो भवोऽस्ति मोक्षोऽस्ति तत्साधकहेतुरस्ति
इत्येवमन्तःकरणे विधेया दृढप्रतीतिः सुविचारणाभिः ॥ १४ ॥

अर्वाग्दृशां नैव परोक्षभावाः प्रत्यक्षधीगोचरतां लभन्ते।
अतीन्द्रियज्ञानिकृतोपदेशैः सन्तो यथार्थं प्रतियन्ति किन्तु ॥१५॥

शुद्धाऽऽत्मतत्त्वं प्रविधाय लक्ष्यममूढदृष्ट्या क्रियते यदेव।
अध्यात्ममेतत् प्रवदन्ति तज्ज्ञा नचाऽन्यदस्मादपवर्गबीजम् ॥१६॥

अध्यात्मभूमीभृत ऊर्ध्वभागे दार्ढ्येन यद्यस्ति व आरुरुक्षा।
महाशयास्तर्ह्युपदिश्यमानं निबोधतेदं हृदयेन तावत् ॥ १७ ॥

महीयसा पुण्यसमुच्चयेन सम्पद्यते मर्त्यभवो विशिष्टः।
सार्थक्यमेनं च नयन्ति सन्तः सज्ज्ञान-सम्यक्चरिते प्रपद्य ॥१८॥

प्राप्तान्यनन्तानि वपूंष्यनेन जीवेन मोहेन वशीकृतेन।
मोहस्य सत्त्वे खलु देहलाभो देहे च लब्धे पुनरुग्रदुःखम् ॥१९॥

जन्मक्षणे च ध्रुवसंगमे च पञ्चत्वकाले नियतं हि दुःखम्।
रोगादिजातानि पुनः कियन्ति दुःखानि मेयानि भवाम्बुराशौ ? २०॥

देहान्तरानागमनाय तस्माद् निघ्नन्ति मोहं मुनयः प्रयत्नैः ।
मोहो हि संसारमहालयस्य स्तम्भः, समस्ताऽसुखवृक्षबीजम् ॥२१॥

सर्वेऽपि दोषाः प्रभवन्ति मोहाद् मोहस्य नाशे नहि तत्प्रचारः ।
इत्येवमध्यात्मवचोरहस्यं विवेकिनश्चेतसि धारयन्ति ॥ २२ ॥

संसारभोगा विविधा अनेन जीवेन भुक्ता बहुशो महान्तः ।
तथाप्यतृप्तो जडबुद्धिरेष तृप्त्यै नृभोगेषु विचेष्टते ही ! ॥ २३ ॥

रिक्तीकृतेऽप्यम्बुनिधौ निपीय तृषा न यस्योपशमं प्रयाता ।
तृणाग्रभागस्थितवारिबिन्दुपानेन तृप्तिं किमसौ लभेत ? ॥ २४ ॥

नवा नवेच्छा सततं जनानां प्रादुर्भवन्ती सकलप्रतीता ।
कर्तव्यकार्यौघसमाप्तिरत्र नास्त्येव तृष्णाऽस्खलितप्रचारात् ॥२५॥

कार्यान्तरं नह्यवशिष्यते मे कार्यं विधायेदमिति स्वचित्ते ।
कुर्वन् सुमेधा अपि तत्समाप्तौ कार्यान्तरं कर्त्तुमनाः पुनः स्यात् ॥२६॥

पारं स्वयम्भूरमणाम्बुराशेः सम्प्राप्नुवानाः* प्रबलौजसोऽपि ।
अपारतृष्णाम्बुधिलंघनाय कर्त्तुं प्रयासं न परिक्षमन्ते ॥ २७ ॥

अखण्डभूमण्डलशासकत्वं न दुर्लभं दुर्लभमेतदेव ।
तृष्णानिरासोपगतावकाशं सन्तोषरत्नं परमप्रभावम् ॥ २८ ॥

न तत् सुखं बिभ्रति भूभुजोऽपि न तत् सुखं स्वर्गसदो न चेन्द्राः ।
यस्मिन् सुखे तुष्टमनःप्रभूते विवेकिनो निर्गमयन्ति कालम् ॥२९॥

कामोद्भवं शर्म यदस्ति लोके दिव्यं महच्छर्म पुनर्यदस्ति ।
तृष्णाक्षयोद्भूतसुखश्रियस्तद् न षोडशीं नाम कलां लभेत ॥३०॥

इहास्ति को नाम तथाविधो नः कुर्मो वयं यत्र ममत्वभावम् ? ।
सर्वेऽपि कर्माशयबन्धभाजः कस्योपकारं खलु कः करोतु ? ॥३१॥

सर्वं च तृष्णानलतापतप्ताः शक्नोति कः कस्य शमार्पणाय ? ।
सम्बन्धमप्यातनुमश्च केन ? न क्वापि सम्बन्धफलोपलम्भः ॥३२॥

---

* शक्ताः शानः ।

अध्यात्मभानौ प्रसरत्प्रतापे मनोनगर्य्यां परिभासमाने।
कुतस्तमः ?, शुष्यति भोगपङ्कः, कषायचौरैः प्रपलाय्यते च ॥९॥

आनन्दपूर्णां च सुधां समाधिं वितन्वतेऽध्यात्मसुधाकराय।
स्पृहा यदीये हृदि नाविरासीत् पशुर्नृरूपेण स मोघजन्मा ॥१०॥

योऽध्यात्मशस्त्रं वहते प्रतीक्ष्णं भवेद् भयं तस्य कुतस्त्रिलोक्याम् ?।
तिरस्कृतो वा नितरां स्तुतो वा नाध्यात्मविद् रुष्यति मोदते च ॥११॥

विधाय पापान्यतिभीषणानि येऽनन्तदुःखातिथयो बभूवुः।
एतादृशानप्युदद्दीधरद् यत् किं वर्ण्यतेऽध्यात्मरसायनं तत् ? ॥१२॥

आत्मस्वरूपस्थितचित्तवृत्तेर्भवप्रपञ्चेषु तटस्थदृष्टेः।
अध्यात्मराजेश्वरसुप्रसादे का न्यूनता सिद्धिषु लब्धिषु स्यात् ? ॥१३॥

आत्माऽस्ति कर्माऽस्ति परो भवोऽस्ति मोक्षोऽस्ति तत्साधकहेतुरस्ति
इत्येवमन्तःकरणे विधेया दृढप्रतीतिः सुविचारणाभिः ॥ १४ ॥

अर्वाग्दृशां नैव परोक्षभावाः प्रत्यक्षधीगोचरतां लभन्ते।
अतीन्द्रियज्ञानिकृतोपदेशैः सन्तो यथार्थं प्रतियन्ति किन्तु ॥१५॥

...ऽऽत्मतत्त्वं प्रविधाय लक्ष्यममूढदृष्ट्या क्रियते यदेव।
अध्यात्ममेतत् प्रवदन्ति तज्ज्ञा नचाऽन्यदस्मादपवर्गबीजम् ॥१६॥

अध्यात्मभूमीभृत ऊर्ध्वभागे दार्ढ्येन यद्यस्ति व आरुरुक्षा।
महाशयास्तर्ह्युपदिश्यमानं निबोधतेदं हृदयेन तावत् ॥ १७ ॥

महीयसा पुण्यसमुच्चयेन सम्पद्यते मर्त्त्यभवो विशिष्टः।
सार्थक्यमेनं च नयन्ति सन्तः सज्ज्ञान-सम्यक्चरिते प्रपद्य ॥१८॥

प्राप्तान्यनन्तानि वपूंष्यनेन जीवेन मोहेन वशीकृतेन।
मोहस्य सत्त्वे खलु देहलाभो देहे च लब्धे पुनरुग्रदुःखम् ॥१९॥

जन्मक्षणे व र्धकसंगमे च पञ्चत्वकाले नियतं हि दुःखम्।
रोगादिजातानि पुनः कियन्ति दुःखानि मेयानि भवाम्बुराशौ ? २०

मरीचिकां वारितया विलोक्य मृगो यथा धावति भूरितृष्णः।
भोगान् सुखत्वेन तथा विदित्वा तान् प्रत्यहो! धावति देहधारी ४५॥

कस्तूरिकासौरभलुब्धचेता मृगो यथा धावति तन्निमित्तम्।
न वेत्ति तु स्वोदरवर्तिनीं तां मूर्खस्तथा सौख्यकृते सुखात्मा॥४६॥

वपुः क्षणध्वंसि विनश्वरी श्रीर्मृत्युः पुनः सन्निहितः सदैव।
तस्मात् प्रमादं परिहाय धर्मे बद्धोद्यमः स्यात् सततं सुमेधाः॥४७॥

प्रभातकाले दिनमध्यकाले सायं च काले खलु वैसदृश्यम्।
पदार्थसार्थे परिदृश्यते तत् क्वार्थे वयं विश्वसिमो विचार्यम्!॥४८॥

नारी किमीया तनयः किमीयो मित्रं किमीयं पितरौ किमीयौ?।
गन्तव्यमेकाकिन एव *हीतः पुण्यं च पापं च परं सह स्यात्॥४९॥

सम्बन्ध औपाधिक एष सर्वः संसारवासे वसतां जनानाम्।
स्वभावसिद्धं परमार्थरूपं ज्ञानादिसम्बन्धमुपेक्षसे किम्?॥५०॥

गिरेर्गुहायां जलधेश्च मध्ये पातालभूमौ त्रिदशालये वा।
क्वाप्येतु मृत्योस्तु भवेन्न गुप्तः स भूर्भुवःस्वस्त्रितयं हि शास्ति॥५१॥

प्रचण्डदोर्दण्डबलव्यपास्तजगद्बला दुःसहतेजउग्राः।
प्रशासति स्म क्षितिमण्डलं ये तेऽपि प्रयाताः खलु रिक्तहस्ताः॥५२॥

जेगीयते स्मेन्दुमयूखशुभ्रं यशो यदीयं पृथिवीतलेऽस्मिन्।
महाभुजास्तेऽपि हता यमेन व्यादाय वक्त्रं सहसा प्रसुप्ताः॥५३॥

महालयोऽयं धनकोश एष इमाः सुमुख्यः परिवार एषः।
ध्यायन्निति त्वं भवसि प्रफुल्लो दृशोस्तु सम्मीलितयोर्न किञ्चित्॥५४॥

अनेन देहेन करिष्यसे यत् पुण्यं तदन्यत्र भवे सहायः।
गमिष्यतस्ते भविता, न तु स्यात् परिच्छदादेकतमोऽपि कश्चित्॥५५॥

चिन्तालतेकाक्षकनालिकेरश्चिन्तामणिः कामगवी सुरद्रुः।
प्राप्तं किमप्यन्यदलौकिकं वा किं तेन सिद्धिः शरणे पुरःस्थे?॥५६॥

* हि इतः।

सर्वे पराधीनतयैव सन्ति कः कं स्वतन्त्रं प्रविधातुमीष्टे ? ।
स्वयं दरिद्रो हि परं विधातुमाढ्यं कथङ्कारमलम्भविष्णुः? ॥३३॥

स्नेहस्य निष्पादन आदितस्तु श्राम्यत्यविच्छेदकृते च पश्चात् ।
एवं दशायां परिभज्यमाने स्नेहे भृशं ताम्यति मानवोऽयम् ॥३४॥

यत्प्रेम्णि चित्तं रमते त्वदीयमन्यत्र चित्तं रमते तदीयम् ।
कथं वृथा मुह्यसि तत् परत्र ? नह्येकपक्षः प्रमदाय रागः ॥३५॥

अनन्यसाधारणभावतः कस्त्वङ्गीचरं प्रेम दधाति लोके ? ।
एवं न चेत् क्वापि न तर्हि धीमन्! स्नेहो विधातुं भवतास्ति युक्तः॥३६॥

यत्प्रेमजन्यं परितापमेषि तत्तापहानाभिमुखः स चेद् न ।
तत् तादृशं प्रेम विषस्य कुण्डं मत्वा परित्यज्य कुरुष्व तोषम् ॥३७॥

स्नेहो नहि स्थायितया क्वचित् स्यात् स्याद् यत्र तत्रापि भवेत् सुतीव्रम् ।
एकस्य मृत्यावितरस्य दुःखं दुःखास्पदं प्रेम ततोऽस्त्यवश्यम् ॥३८॥

सर्वो जनः स्वार्थनिमग्नचेताः स्वार्थश्च सम्बन्धविधानदक्षः ।
प्रेमप्रदीपस्य स एव तैलं स्वार्थे समाप्ते खलु कः स्निग्धः ? ॥३९॥

पितेति मातेति सहोदरेति मित्रेति कर्मस्फुरणोपजातम् ।
. ..वं खल्वपि मन्दमेधाः सम्बन्धमात्मीयतया प्रवेत्ति ॥४०॥

यावास्ति वित्तं प्रचुरं तदीया भवन्ति सर्वे मृदुलस्वभावम् ।
।।रिक्त आप्ते तु सहोदरोऽपि प्रेमी वयस्योऽपि पराङ्मुखः स्यात् ।४१।

न कोऽपि कस्यापि समस्ति लोके वृथैव मोहाद् व्यथते जनोऽयम् ।
अध्यात्मदृष्ट्या परिचिन्तयेच्चेद् निःसारमेतद् निखिलं प्रतीयात्॥४२॥

महालयाऽऽरामसुलोचनादि यद् बाह्यदृष्ट्या परिदृश्यमानम् ।
भवेद् विमोहाय, तदेव वस्तु वैराग्यलक्ष्म्यै पुनरात्मदृष्ट्या ॥४३॥

दुःखं विना किञ्चन दृश्यते न सुखस्य लेशोऽपि भवप्रपञ्चे ।
तथाप्यहो ! वैषयिकं प्रसंगं सुखस्वरूपं प्रविदन्ति मूढाः ॥ ४४ ॥

मरीचिकां वारितया विलोक्य मृगो यथा धावति भूरितृष्णः ।
भोगान् सुखत्वेन तथा विदित्वा तान् प्रत्यहो ! धावति देहधारी ४५॥

कस्तूरिकासौरभलुब्धचेता मृगो यथा धावति तन्निमित्तम् ।
न वेत्ति तु स्वोदरवर्तिनीं तां मूर्खस्तथा सौख्यकृते सुखात्मा ॥४६॥

वपुः क्षणध्वंसि विनश्वरी श्रीर्मृत्युः पुनः सन्निहितः सदैव ।
तस्मात् प्रमादं परिहाय धर्मे बद्धोद्यमः स्यात् सततं सुमेधाः ॥४७॥

प्रभातकाले दिनमध्यकाले सायं च काले खलु वैसदृश्यम् ।
पदार्थसार्थे परिदृश्यते तत् क्वार्थे वयं विश्वसिमो विचार्यम् ! ॥४८॥

नारी किमीया तनयः किमीयो मित्रं किमीयं पितरौ किमीयौ ? ।
गन्तव्यमेकाकिन एव *हीतः पुण्यं च पापं च परं सह स्यात् ॥४९॥

सम्बन्ध औपाधिक एष सर्वः संसारवासे वसतां जनानाम् ।
स्वभावसिद्धं परमार्थरूपं ज्ञानादिसम्बन्धमुपेक्षसे किम् ? ॥५०॥

गिरेर्गुहायां जलधेश्च मध्ये पातालभूमौ त्रिदशालये वा ।
क्वाप्येतु मृत्योस्तु भवेन्न गुप्तः स भूर्भुवःस्वस्त्रितयं हि शास्ति ॥५१॥

प्रचण्डदोर्दण्डबलव्यपास्तजगद्बला दुःसहतेजउग्राः ।
प्रशासति स्म क्षितिमण्डलं ये तेऽपि प्रयाताः खलु रिक्तहस्ताः॥५२॥

जेगीयते स्मेन्दुमयूखशुभ्रं यशो यदीयं पृथिवीतलेऽस्मिन् ।
महाभुजास्तेऽपि हता यमेन व्यादाय वक्त्रं सहसा प्रसुप्ताः ॥५३॥

महालयोऽयं धनकोश एष इमाः सुमुख्यः परिवार एषः ।
ध्यायन्निति त्वं भवसि प्रफुल्लो दृशोस्तु सम्मीलितयोर्न किञ्चित् ।५४।

अनेन देहेन करिष्यसे यत् पुण्यं तदन्यत्र भवे सहायः ।
गमिष्यतस्ते भविता, न तु स्यात् परिच्छदादेकतमोऽपि कश्चित् ।५५।

पिनाकलतेकाक्षकनालिकेरश्चिन्तामणिः कामगवी सुरद्रुः ।
प्राप्तं किमप्यन्यदलौकिकं वा किं तेन सिद्धिश्चरणे पुरःस्थे ? ॥५६॥

* हि इतः ।

अस्ति त्रिलोक्यामपि कः शरण्यो जीवस्य नानाविधदुःखभाजः ?।
धर्मः शरण्योऽपि न सेव्यते चेद् दुःखप्रहाणं लभतां कुतस्त्यम्?॥५७॥

संसारदावानलदाहतप्त आत्मैष धर्मोपवनं श्रयेच्चेत्।
क्व तर्हि दुःखानुभवावकाशः? कीदृक् तमो भास्वति भासमाने?॥५८॥

मातेव पुष्णाति पितेव पाति भ्रातेव च स्निह्यति मित्रवच्च।
प्रीणाति धर्मः परिषेवितस्तद् अनादरः साम्प्रतमस्य नैव॥५९॥

सौस्थ्यं धनित्वं प्रतिभां यशश्च लब्ध्वा सुखस्यानुभवं करोषि।
यस्य प्रभावेण तमेव धर्ममुपेक्षमाणो नहि लज्जसे किम् ?॥६०॥

इच्छन्ति धर्मस्य फलं तु सर्वे कुर्वन्ति नामुं पुनरादरेण।
नेच्छन्ति पापस्य फलं तु केऽपि कुर्वन्ति पापं तु महादरेण॥६१॥

इष्यन्त आम्रस्य फलानि चेत् तत् तद्रक्षणादि प्रविधेयमेव।
एवं च लक्ष्म्यादिफलाय कार्यां कुर्वन्त्यबोधा न हि धर्मरक्षाम्॥६२॥

सुखस्य मूलं खलु धर्म एवच्छिन्ने च मूले क्व फलोपलम्भः ?।
आरूढशाखाविनिकृन्तनं तद् यद् धर्ममुन्मुच्य सुखानुषङ्गः॥६३॥

करोषि यत् त्वं वपुषः सदैव पोषाय चालङ्करणाय चेहाम्।
प्रतिग्रहः किं नु फलस्य देहाद् वितर्कितश्चेतसि वर्त्तते ते ?॥६४॥

भुक्तानि भोज्यानि सुरोचकानि पीतानि पेयानि रसाद्भुतानि।
यदा बहिस्तात् क्षिपते शरीरं तदा विरूपत्वममीषु कीदृक्?॥६५॥

रसायनं सेवतु* सर्वदापि भुङ्क्तां पुनः पौष्टिकभोजनानि।
तथापि नो नङ्क्ष्यति देहकुम्भे भस्मावशेषीभवनस्वभावः॥६६॥

तैलेन सम्मर्दनतो यथावत् स्नानात् जलेनोत्तमगन्धिना च।
सुराघटादप्यतिनिन्द्य एष कायोऽशुचिः किं भविता पवित्रः?॥६७॥

रोगैः प्रपूर्णं भविनां शरीरमन्तःस्थितेष्वेषु जनो मदान्धः।
यदा बहिस्ते प्रकटीभवन्ति दीनाननः पश्यति दुःखमेव॥६८॥

* 'सेव्' धातोः परस्मैपदित्वे सुलभाः शिष्टप्रयोगाः।

अदाद् विपत्तिं सकृदेव योऽत्र भूयः कदाप्याद्रियते स नैव।
चित्रं पुनः सेव्यत एव देहो योऽनादिकालाद् ददद्स्ति दुःखम्॥६९॥

तस्मात् परित्यज्य शरीरमोहं चित्तस्य शुद्ध्यै सततं यतस्व।
न देहशुद्धौ पुरुषार्थसिद्धिश्चित्ते तु शुद्धे पुरुषार्थसिद्धिः॥७०॥

अन्यत्र मोक्षाद् नहि वास्तवं शं मोक्षश्च देहश्च मिथो विरुद्धौ।
मुमुक्षवस्तेन न देहमोहं कुर्वन्ति, कुर्वन्ति बुभुक्षवस्तु॥ ७१॥

येनैव देहेन विवेकहीनाः संसारबीजं परिपोषयन्ति।
तेनैव देहेन विवेकभाजः संसारबीजं परिशोषयन्ति॥ ७२॥

मिष्टान्नभोगं कुरुतः समानं द्वौ पूरुषावेकतरस्तु तत्र।
बध्नाति कर्माणि, निहन्ति चान्यो मोहे विवेके च विजृम्भमाणे॥७३॥

चेद् धावतो जीववधो न जातो जातः पुनः पश्यत एव यातः।
तथापि हिंसाफलमादिमे स्याद् मूढे, द्वितीये न धृतोपयोगे॥७४॥

शरीरमेवाऽऽत्मतया विदन्तो विदन्ति नैतत् खलु-"कोऽहमस्मि"।
इदं जगत् विस्मृतवत् स्वमेव स्वस्मिन् भ्रमः स्फूर्जति कीदृशोऽयम्?
॥ ७५॥

रागं च रोषं च परत्र कृत्वा कथं वृथा हारयसे भवं भोः!।
माध्यस्थ्यमेवाऽऽश्रय चेत् सुखेच्छा माध्यस्थ्यजं शर्म परानपेक्षम्
॥ ७६॥

परोन्नतौ किं परिखिद्यसे त्वं परक्षतौ किं वहसे प्रमोदम्?।
स्पृशन्ति नान्यं तव दुर्विकल्पास्त्वामेव बध्नन्ति तु कर्मपाशैः॥७७॥

परोन्नतौ चेत् तव दुष्प्रयत्नैः क्षतिर्भवेत् कस्तव तत्र लाभः?।
न स्यात् क्षतिस्तर्ह्यपि को नु लाभस्तत्तापहेतून् त्यज दुर्विकल्पान्॥७८॥

जागर्त्ति पुण्यं प्रबलं यदीयं प्रवर्धमानेऽभ्युदये तदीये।
कोऽस्त्यन्यथाकर्तुमलं सुरोऽपि नेर्ष्यां ततः क्वापि करोतु धीमान्
॥ ७९॥

अभ्युन्नतिश्चावनतिश्च यत् स्यात् पुण्यस्य पापस्य च कार्यमेतत् ।
क्षीणे च पुण्येऽभ्युदयो व्यपैति तन्नश्वरे शर्मणि को विमोहः? ॥८०॥

संवेद्यते यत् सुखमद्वितीयं कदापि माध्यस्थ्यलवोपलम्भे ।
प्रशस्तकर्मौघजसौख्यराशिरप्यस्य नैवाऽर्हति तुल्यभावम् ॥८१॥

ऐश्वर्यमालोक्य भुवां विचित्रं चित्रीयसे मुह्यसि वा कथं त्वम्? ।
न किञ्चिदेतत् सुरसम्पदोऽग्रे विपाक एवाऽस्ति च कर्मणोऽसौ ॥८२॥

इन्द्राः सुरा भूमिभुजः प्रधाना महाप्रतापा अधिकारिणश्च ।
सर्वेऽपि कर्मप्रभवा भवन्ति कस्तत् सतां कर्मफले विमोहः? ॥८३॥

सदा निरीक्षेत निजं चरित्रं यच्छुद्धिमाप्नोति विहीयते वा ।
हानिं च वृद्धिं च धनस्य पश्यन् जडश्चरित्रे न दृशं करोति ॥८४॥

करोषि दृष्टिं न गुणे परस्य दोषान् ग्रहीतुं तु सदाऽसि सज्जः ।
युक्तं न ते शूकरवत् पुरीषे परस्य दोषे रमणं विधातुम् ॥८५॥

दोषानुबद्धः सकलोऽपि लोको निर्दूषणस्त्वस्ति स वीतरागः ।
न किं पुनः पश्यसि दह्यमानमहो! स्वयोरेव पदोरधस्तात् ॥८६॥

वृथाऽन्यचिन्तां कथमातनोषि? वृथाऽन्यकार्ये किमुपस्थितः स्याः? ।
किं धूमपुञ्जं यतसे ग्रहीतुं विस्तारयन् चेतसि दुर्विकल्पान् ॥८७॥

बिभेषि दुःखाद् यदि साधुबुद्धे! दुःखानुकूलां त्यज दुष्प्रवृत्तिम् ।
नेष्टो वियोगः सुखसम्पदश्चेत् चरित्रमापादय तर्हि शुद्धिम् ॥ ८८ ॥

सुखं च दुःखं च शरीरिपृष्ठे लग्ने सदा कर्मविचित्रतातः ।
मत्तो न तु स्यात् सुखसम्प्रयोगे न व्याकुलःस्याच्च विपत्प्रयोगे ॥८९॥

निशाविरामे दिनमभ्युदेति दिने समाप्ते च निशोपयाति ।
तथैव विश्वे सुख-दुःखचक्रं ज्ञात्वा सुधीः स्याद् न कदाप्यधीरः ९०॥

उदेति रक्तोऽस्तमुपैति रक्तः सहस्रभानुर्विदितो यथैषः ।
तथा महान्तोऽपि महोदयत्वे विपत्प्रसंगे पुनरेकरूपाः ॥९१॥

तदेवं संसारं विषयविषदुःखैकगहनं
विदित्वा निःसंगीभवति रमते चाऽऽत्मनि बुधः ॥११४॥

पूर्णानन्दस्वभावः परमविभुरयं शुद्धचैतन्यरूपः
सर्वोद्भासिप्रकाशोऽहह तदपि जडैः कर्मभिः सम्प्रविश्य।
म्लानिं नीतो नितान्तं तदथ विमलतां नेतुमेनं यतध्वं
प्रागुक्तं चात्र भूयः स्मरत दृढतया कर्मभूमिः स मोहः॥११५॥

कृत्वा स्वस्थं हृदयकमलं मुक्तबाह्यप्रसङ्गं
शान्त्यारामे समुपविशतो-द्धर्तुमात्मानमेनम्।
मन्त्रं हंहो! कुरुत सुधियोऽनादितः पाशबद्धं
कः स्यात् स्वात्मोपरि हतदयो मूढधीशेखरोऽपि? ॥११६॥

इत्येवं गृहिणोऽपि चेतसि सदा सद्भावनाऽऽलम्बनाद्
अध्यात्मं रचयन्ति संविदधतः संसारकार्याण्यपि।
एतेनैव पथा च तेऽपि विषमाद् मुच्यन्त एतद्भवाद्
इत्येवं परिदर्शितः परिमितोऽध्यात्मोपदेशो मृदुः ॥११७॥

इति "प्रकीर्णक उपदेशः" प्रथमं प्रकरणम्।



दुःखान्यपाराण्यनुभूय यत्र शरीरभाजो जनिमाप्नुवन्ति ।
विलोक्य तत् स्थानकमेव भूयो हृष्यन्ति, हा! दारुण एष कामः॥१०४॥

भवेन्मतिश्चेद् विषयानुषङ्गाऽतिरेकतः शाम्यति कामवेगः ।
तदेतदज्ञानविजृम्भितं ते वह्निर्घृतेनेव हि वर्धते सः ॥ १०५ ॥

प्रतिष्ठिता यत्र शरीरशक्तिरधिष्ठितो यत्र धियो विकासः ।
व्यवस्थिता यत्र सुरूप-कान्तिर्वीर्यं प्रतिघ्नन्ति जडास्तदेव १०६॥

वैराग्यपीयूषरसेन धौतमप्याशु चेतो मलिनं क्षणात् स्यात् ।
विकारहेतौ निकटं प्रयाते, कामो बलीयांश्चपलं च चेतः ॥१०७॥

किं तत्र, सिंहोपरि चाऽऽस्य देशाटनप्रतिज्ञापरिपूरणं यत् ।
*विकारहेतौ सति विक्रियन्ते न ये, त एव प्रभवो यथार्थाः ॥१०८॥

अपि त्रिलोकेऽस्खलितप्रतापं किं वर्णयामो मदनं पिशाचम् ।
महात्मनोऽपि स्फुरितप्रबोधान् योऽग्रे स्त्रियाः साञ्जलिकानकार्षीत्
॥१०९॥

मनो द्रढीयः प्रविधाय सत्त्वप्रतिष्ठवृत्तिर्विकसद्विवेकः ।
अध्यात्मचिन्तां विदधद् भवेच्चेत् किमस्य कुर्याद् मदनः शिखण्डी?
॥११०॥

यथा मनःसारथिरिन्द्रियाश्वान् प्रयुङ्क्त एवं विषयेषु यान्ति ।
निपातयन्त्याशु च तत्र जीवमतोऽधिकः कः परतन्त्रभावः?॥१११॥

स एव धीरो बलवान् स एव स एव विद्वान् स पुनर्मुनीन्द्रः ।
येनेन्द्रियाणामुपरि स्वसत्ता विस्तारिता मानसनिर्जयेन ॥११२॥

जितेन्द्रियं शान्तमनःप्रतिष्ठितं कषायमुक्तं ममताविवर्जितम् ।
उदासितारं समुपास्महे मुनिं स एव सारं लभते स्म जीवनात्॥११३॥

सुखं वाञ्छन् सर्वस्त्रिजगति तदर्थं प्रयतते
तथापि क्लेशौघान् सततमनुबोभोति विविधान् ।

---

* कुमारसम्भवगतश्लोकतृतीयपादेन पूर्तिः ।

अपक्षपाताः शुचितत्त्वबोधा महाव्रतेषु स्थिरतां दधानाः ।
असङ्गिनः शान्तिसुधोपभोगा धर्मोपदेशा गुरवोऽवसेयाः ॥१०॥

तथाविधाः श्रीगुरवो भवाब्धौ स्वयं तरीतुं न परं यतन्ते ।
उद्धर्तुमन्यानपि देहभाजः परोपकाराय सतां हि यत्नः ॥११॥

नृदेवयोगीन्द्रनतः स देव आत्मश्रियं संप्रतिपत्तुमिच्छोः ।
स्याद् वल्लभो वल्लभवस्तुतोऽपि योगोऽस्ति दूरे न दशेदृशी चेत्
॥ १२ ॥

यथार्थदेवत्वविनिश्चयस्याभावे प्रशस्ताशयतो गृहस्थैः ।
सर्वेऽपि देवाः परिपूजनीया नत्वाग्रहः साम्प्रतमज्ञतायाम् ॥१३॥

शास्त्रेष्वपीदं विषये च चारिसंजीवनीचारनयो बभाषे ।
विशेषदृष्टौ च परत्र साम्याद् देवो यथार्थः परिषेवितव्यः ॥१४॥

न रागरोषादिकदोषलेशो यत्रास्ति बुद्धिः सकलप्रकाशा ।
शुद्धस्वरूपः परमेश्वरोऽसौ सतां मतो 'देव'पदाभिधेयः ॥१५॥

रागेण रोषेण वयं प्रपूर्णास्तथैव देवोऽपि हि सम्भवेच्चेत् ।
कस्तत्र चास्मासु च तर्हि भेदो विवेक्तुमर्हन्ति बुधा यथावत् ॥१६॥

तस्मात् स देवः खलु वीतरागः प्रियोऽप्रियो वा नहि तस्य कश्चित् ।
रागादिसत्ताऽऽवरणानि नाम तद्वांश्च सर्वज्ञतया कुतः स्यात्?॥१७॥

वयं सरागाः प्रभुरस्तरागः किञ्चिज्ज्ञतास्मासु स सर्ववेदी ।
शरीरिणः स्मः स पुनर्विदेहोऽस्माकं समाराध्यतमः स तस्मात् ॥१८॥

वयस्यगोष्ठीं विविधां विधातुं मिलेत् कथञ्चित् समयः सदापि ।
अल्पोऽवकाशोऽपि न शक्यलाभो देवस्य पूजाकरणाय हन्त!॥१९॥

आत्मोन्नतिं वास्तविकीं यदीयं समीहतेऽन्तःकरणं स मर्त्यः ।
उपासनार्थं परमेश्वरस्य कथञ्चिदाप्नोत्यवकाशमेव ॥ २० ॥

# द्वितीय–प्रकरणम् ।

## पूर्वसेवा ।

न दुष्करो योगपथाधिरोहः किं दुष्करं तर्हि जगत्त्रयेऽपि ?।
योगस्य भूमावधिरोहणार्थमादावुपायः परिदर्श्यतेऽयम् ॥ १ ॥

पूजा गुरूणामथ देवताया आचारशुद्धिस्तपसि प्रवृत्तिः ।
निःश्रेयसे द्वेषविवर्जितत्वमेषैव शास्त्रेऽकथि 'पूर्वसेवा' ॥ २ ॥

पिता च माता च कलागुरुश्च ज्ञातेयवृद्धाः पुनरेतदीयाः ।
धर्मोपदेशप्रवणा महान्तः सतां मतः श्रीगुरुवर्ग एषः ॥ ३ ॥

कर्त्तव्य एतस्य सदा प्रणामश्चित्तेऽप्यमुष्मिन् बहुमान एव ।
पुरोऽस्य सम्यग् विनयप्रवृत्तिर्नावर्णवादस्य निबोधनं च ॥ ४ ॥

आराध्यभावः प्रथमोऽस्ति पित्रोर्विमानयंस्तौ लघुधीर्बुधोऽपि ।
आराधयेद् धर्मगुरुक्रमौ किं नाबद्धमूलस्तरुरेधते हि ॥ ५ ॥

पुण्यैर्महद्भिर्गुरुदेवसेवा सम्प्राप्यते, तत्र नहि प्रमादः ।
कर्तुं क्षमो बुद्धिमतां कदापि कल्याणगङ्गाप्रभवोऽयमध्वा ॥ ६ ॥

अनादरं ये गुरुदेवतानां कुर्वन्ति, पात्रं खलु ते कृपायाः ।
अमी वराका निजकर्मदोषाहता यतः श्रेयसि प्रस्खलन्ति ॥७॥

[illegible] दास्यमुपैति यस्य तस्यावमानः परिषह्यते चेत् ।
न सह्यते तर्हि कथं गुरूणामप्यप्रिया भावुककारणं वाक् ? ॥८॥

प्रेम्णा बलाद् वा वनितावचांसि सत्कारमार्गेऽस्खलितं नयन्ति ।
वाचं हितां तत्रभवद्गुरूणां न मन्वते, कीदृश एष मोहः ? ॥ ९ ॥

अपक्षपाताः शुचितत्त्वबोधा महाव्रतेषु स्थिरतां दधानाः ।
असङ्गिनः शान्तिसुधोपभोगा धर्मोपदेशा गुरवोऽवसेयाः ॥१०॥

तथाविधाः श्रीगुरवो भवाब्धौ स्वयं तरीतुं न परं यतन्ते ।
उद्धर्तुमन्यानपि देहभाजः परोपकाराय सतां हि यत्नः ॥११॥

नृदेवयोगीन्द्रनतः स देव आत्मश्रियं संप्रतिपत्तुमिच्छोः ।
स्याद् वल्लभो वल्लभवस्तुतोऽपि योगोऽस्ति दूरे न दृशोदृशी चेत्
॥ १२ ॥

यथार्थदेवत्वविनिश्चयस्याभावे प्रशस्ताशयतो गृहस्थैः ।
सर्वेऽपि देवाः परिपूजनीया नत्वाग्रहः साम्प्रतमज्ञतायाम् ॥१३॥

शास्त्रेष्वपीदं विषये च चारिसंजीवनीचारनयो बभाषे ।
विशेषदृष्टौ च परत्र साम्याद् देवो यथार्थः परिषेवितव्यः ॥१४॥

न रागरोषादिकदोषलेशो यत्रास्ति बुद्धिः सकलप्रकाशा ।
शुद्धस्वरूपः परमेश्वरोऽसौ सतां मतो 'देव'पदाभिधेयः ॥१५॥

रागेण रोषेण वयं प्रपूर्णास्तथैव देवोऽपि हि सम्भवेच्चेत् ।
कस्तत्र चास्मासु च तर्हि भेदो विवेक्तुमर्हन्ति बुधा यथावत् ॥१६॥

तस्मात् स देवः खलु वीतरागः प्रियोऽप्रियो वा नहि तस्य कश्चित् ।
रागादिसत्ताऽऽवरणानि नाम तद्वांश्च सर्वज्ञतया कुतः स्यात्? ॥१७॥

वयं सरागाः प्रभुरस्तरागः किञ्चिज्ज्ञतास्मासु स सर्ववेदी ।
शरीरिणः स्मः स पुनर्विदेहोऽस्माकं समाराध्यतमः स तस्मात् ॥१८॥

वयस्यगोष्ठीं विविधां विधातुं मिलेत् कथञ्चित् समयः सदापि ।
अल्पोऽवकाशोऽपि न शक्यलाभो देवस्य पूजाकरणाय हन्त! ॥१९॥

आत्मोन्नतिं वास्तविकीं यदीयं समीहतेऽन्तःकरणं स मर्त्यः ।
उपासनार्थं परमेश्वरस्य कथञ्चिदाप्नोत्यवकाशमेव ॥ २० ॥

लोकापवादाद् भयशीलता च सुदक्षिणत्वं च कृतज्ञता च।
सर्वत्र निन्दापरिवर्जनं च सतां स्तवः प्रस्तुतयोग्यवाक्त्वम् ॥२१॥

कृतप्रतिज्ञापरिपालनं चासत्सङ्गव्ययत्यागविधानवत्त्वम्।
नालस्यवश्यं पुनराग्रहश्च सुयोग्यकार्येषु विवेकबुद्ध्या ॥ २२ ॥

अदैन्यमापद्यपि, नम्रता च सम्पत्प्रकर्षे, महतां च मार्गे।
समारुरुक्षाऽऽर्जवमार्दवे च सन्तोषवृत्तिः सुविचारता च ॥२३॥

लोकाऽविरुद्धाचरणानुवृत्तिः सर्वत्र चौचित्यविधायकत्वम्।
एवंप्रकारः स्वयमूहनीयः सद्भिः सदाचार उदारबुद्ध्या ॥ २४ ॥
चतुर्भिः कलापकम्।

स्वजीवनं कीदृशमुच्चनीति सम्पादयेद् योगपथारुरुक्षुः।
तदेतदेतेन विचारकाणां मनोभुवां स्पष्टमुपागतं स्यात् ॥ २५ ॥

बहुप्रकारं तप आमनन्ति युक्तं यथाशक्ति तपो विधातुम्।
देहस्य शुद्धिर्हृदयोज्ज्वलत्वं विधीयमानेऽत्र विवेकपूर्वम् ॥२६॥

किञ्चिद् व्यथायामपि सम्भवन्त्यामनादरस्तत्र न संविधेयः।
अभ्यासतोऽग्रे सुकरं तपःस्यात् कष्टाद् विना कर्म न हन्यतेऽपि ॥२७॥

न रोचते भोजनमन्वहं च कस्मै?, परं तेन क इष्यतेऽर्थः?।
अयं भवःस्याद् यदि सौख्यपूर्णस्तदा क्षमः स्याद् विषयैकसङ्गः ॥२८॥

न वास्तवो भोजनमात्मधर्मो देहस्य सङ्गेन विधीयते तु।
तस्मादनाहारपदोपलब्ध्यै युक्तं तपोऽप्यभ्यसितुं सुधीनाम् ॥२९॥

न यत्र दुर्ध्यानमुपस्थितं स्याद् योगा न हानिं पुनराप्नुवन्ति।
क्षीणानि न स्युःपुनरिन्द्रियाणि कुर्यात् तपस्तत् सुविचारयुक्तम् ।३०।

धनस्य हेतोरथवा नियोगे स्वस्वामिनः संसहते बुभुक्षाम्।
उद्देश आत्मोन्नतिसम्पदस्तु तपो यथाशक्त्यपि नैव चित्रम्! ॥३१॥

वदन्ति सन्तः, प्रतिपद्यते च दावाग्निकल्पो भव एष भीमः ।
विचित्ररूपास्ति च कर्मसृष्टिस्तद् भोगकीटीभवितुं न युक्तम् ॥३२॥

नानाविधस्वादुरसप्रपूर्णभोज्योपभोगे प्रविधीयमाने ।
प्रपद्यते यद्यपवर्गलक्ष्मीर्भवे तदा को वत पर्यटन् स्यात् ? ॥ ३३ ॥

अन्तःशरीरं प्रचरन्ति कर्मप्रत्यर्थिनो गुञ्जदनन्तशौर्याः ।
अन्नं प्रवेश्यं यदि पोषणीया नान्नं प्रवेश्यं यदि शोषणीयाः ॥३४॥

सम्पादितश्चेत् तपआदरेण कष्टस्य सम्यक् सहनस्वभावः ।
वहुप्रसङ्गे फलवान् तदा स्याद् रौद्रो न च स्याद् मरणक्षणोऽपि॥३५॥

भुक्तिः सकृद् वा रसवर्जिता वे-षदूनकुक्षिर्मितवस्तुभिर्वा ।
दिव्याशनानामपि साम्यतो वा प्रकीर्त्तिता सापि तपःस्वरूपा ॥३६॥

गार्द्ध्यस्य मन्दीकरणं तपोऽस्ति प्राप्तं रहस्यं तपसोऽत्र सर्वम् ।
धन्या रमन्तेऽत्र विवेकदीपप्रोद्भासितात्मोन्नतिहेतुमार्गाः ॥३७॥

समग्रकर्मक्षयतोऽपवर्गो भवाभिनन्दा इमकं द्विषन्ति ।
अज्ञानसाम्राज्यमिहास्ति हेतुरहो ! महादारुण एष मोहः ॥३८॥

संसारभोगे सुखमद्वितीयं ये मन्वते लुप्तविवेकनेत्राः ।
निःश्रेयसं ते समधिक्षिपन्त आश्चर्यपात्रं न सतां भवन्ति ॥३९॥

सुस्वादुभुक्तिर्मधुरं च पानं मनोज्ञवस्त्राभरणादिधानम् ।
इतस्ततः पर्यटनं यथेष्टं वयस्यगोष्ठी सुमुखीमुखं च ॥ ४० ॥

इत्यादिकं शर्म वहुप्रकारकं संसारवासे प्रकटप्रतीतिकम् ।
मुक्तौ क्व नामेति विपस्य मोदकान् प्रसारयन्त्यज्ञगणे कुबुद्धयः॥४१॥
युग्मम् ।

संसारभोगेषु सुखं यदेव प्रतीतिमारोहति दुःखमेतत् ।
कर्मोद्भवत्वात् क्षणभङ्गुरत्वाद् दुःखान्वितत्वादमहत्त्वतश्च ॥४२॥

समस्तकर्मक्षयतोऽखिलार्थप्रकाशयुक्तं सुखमद्वितीयम् ।
यस्मिन् त्रिलोकीसुखमस्ति बिन्दुर्मुक्तौ क इच्छेन्नहि ?, को भवेद्
द्विट् ? ॥४३॥

एवं च मुक्तावनुकूलवृत्तिरवाद्युपायोऽभिहितेषु मुख्यः ।
यस्मिन् स्थितेऽन्येऽपि भवन्त्युपाया यत्रास्थिते व्यर्थ उपायराशिः
॥ ४४ ॥

इत्येव योगप्रथमाधिकारिप्रवर्त्तनं किञ्चिदिदं न्यगादि ।
यथावदस्मिन् पथि सञ्चरन्तः सम्यग्दृशो ग्रन्थिभिदा भवन्ति ।४५।

अर्धे परावर्त्तननामकालेऽवशिष्ट उत्कृष्टतया भवन्ति ।
सम्यग्दृशो मोक्षपदस्य लाभेऽप्ययं विलम्बोऽर्थत एव भूयान् ॥४६॥

विमलः परिणाम आत्मनः
किल सम्यक्त्वमुदीरितं बुधैः ।
अपवर्गपुरप्रवेशनं
न हि मुद्रामनवापुषामिमाम् ॥ ४७ ॥

---

# तृतीय-प्रकरणम् ।



## अष्टाङ्गयोगः ।

यत्राऽस्ति दुःखाननुविद्धमेवानन्तं सुखं शाश्वतमेष मोक्षः ।
समग्रकर्मक्षयलक्षणोऽसौ नह्यस्ति मुक्तिः सति कर्मलेशे ॥ १ ॥

स्वर्गापवर्गौ भवतो विभिन्नौ स्वर्गाद् यतः स्यात् पतनं, न मोक्षात् ।
स्वर्गे सुखश्रीः पुनरिन्द्रियोत्था ज्ञेया परब्रह्ममयी तु मोक्षे ॥२॥

सकर्मकाकर्मकतो द्विधाऽऽत्माऽऽदिमस्तु संसारितया प्रसिद्धः ।
अकर्मको निर्वृत-मुक्त-सिद्ध-ब्रह्मादिशब्दैरभिधीयते च ॥ ३ ॥

मोक्षाऽऽप्तये योगविदः पुराणा योगस्य पन्थानमदीदृशन्नः ।
अष्टाङ्गभेदः स पुनः प्रसिद्धः प्रदर्श्यते किञ्चन तत्स्वरूपम् ॥४॥

यमनियमाऽऽसनप्राणायामाः प्रत्याहृतिश्च धारणया ।
सार्धं ध्यानसमाधी इत्यष्टाङ्गानि योगस्य ॥ ५ ॥

तत्राहिंसासत्याऽस्तेयब्रह्मापरिग्रहाश्च यमाः ।
शौचं तोषश्च तपः स्वाध्यायः प्रभुविचिन्तनं नियमाः ॥ ६ ॥

एकान्ततोऽभिन्नतया शरीर-शरीरिणौ सम्भवतो न युक्तौ ।
परो भवः कस्य हि जाघटीतु नाशे शरीरस्य शरीरिनाशात् ? ॥७॥

नाप्येवमेकान्तपृथक्त्वमङ्गाङ्गिनोर्विचाराध्वनि सञ्चरिष्णु ।
एवं हि हिंसा नहि सम्भवित्री हते शरीरेऽपि शरीरभाजः ॥८॥

मेधाविनस्तत् प्रतियन्ति देहाद् विभिन्नमप्यङ्गभृतं कथञ्चित् ।
संयोगतोऽभिन्नमतोऽङ्गनाशे या स्याद् व्यथा तां प्रवदन्ति हिंसाम् ९॥

आकीटकादा च सुराधिराजात् सर्वत्र जीवेषु सुखासुखस्य ।
प्रियाप्रियत्वं परिचिन्त्य धीमान् न क्वापि हिंसाऽऽचरणं
विदध्यात् ॥ १० ॥

शरीरिणां वल्लभवल्लभं च प्राणाः स्वकीया इदमर्थमेव ।
साम्राज्यमप्याशु जनास्त्यजन्ति तत् किंविधं दानमलं वधाय? ॥११॥

अन्यस्य चेतःकमलस्य खेदहिमोदकेन ग्लपनेऽपि धीराः ।
हिंसावकाशं समुदीरयन्ति कथीकृतौ किं पुनरङ्गभाजाम् ? ॥ १२ ॥

प्रचण्डरोगाभिहतः पशुर्वा नरोऽथवा मारयितुं न युक्तः ।
केनोदितं प्राप्स्यति शं स मृत्वा नेतोऽपि च प्राप्स्यति दुःखमुग्रम्?१३।

व्यापादनं हिंसकवृत्तिभाजामपि क्षमं नेत्यवधारणीयम् ।
लोके श्व-मार्जार-मयूर-गृध्रादयोऽङ्गिनः के न भवन्ति हिंस्राः?॥१४॥

भयङ्करैर्वृश्चिक-दन्दशूकादिभिः परिक्लेशमधिश्रितोऽपि ।
न मारयेन्नापि च ताडयेत् तान् नह्यत्र कश्चित् फलसिद्धिलेशः॥१५॥

न पापहेतुः सुकृताय पापोच्छेदाय वा प्राणिवधः कदापि ।
किं जायते जीवितनाशहेतुर्हालाहलं जीवितसम्पदायै ? ॥१६॥

धर्मस्त्वहिंसाप्रभवः, कथं तद् हिंसात आविर्भविता कदापि ? ।
नह्यम्बुतः सम्प्रभवन्ति पाथोरुहाणि वन्हेर्जननं लभन्ते ॥ १७ ॥

इदं परं तेज इयं परा श्रीरिदं परं भाग्यमिदं महत्त्वम् ।
अशेषविश्वेश्वरनम्रमौलिनमस्कृतं सत्यमहाव्रतं यत् ॥ १८ ॥

मृषोद्यते यत् फलमाकलय्य फलस्य खल्वस्य मृषाऽऽगसश्च ।
अस्त्यन्तरं कीदृगवेक्षणीयं युक्ता हि कार्येषु तुलासमा धीः ॥१९॥

धनार्जनं न्यायपथेन सम्यगुद्योगतोऽशक्यतया क आह ? ।
आरम्भतो धीरतया तु सह्या आपद्यमानाः प्रतिकूलयोगाः ॥२०॥

न्त सर्वाण्यपि दूषणानि यथार्थवादे प्रविजृम्भमाणे ।
क्रीडति वारणानां सम्भावनीयो हि कुतः प्रचारः?॥२१॥

प्रयातु लक्ष्मीः स्वजना अरातीभवन्त्वकीर्त्तिः प्रसरीसरीतु ।
अद्यैव वा मृत्युरुपस्थितोऽस्तु वदेदसत्यं न तथापि धीरः ॥२२॥

यतः परिक्लेशमुपैति जन्तुर्भाषेत सत्यामपि तां गिरं न।
पृष्टोऽपि जल्पेन्न कदापि मर्मावित् कर्कशं वैरनिबन्धनं च ॥२३॥

पुनन्ति ते स्वीयपदारविन्दैः पृथ्वीतलं सुन्दरभागधेयाः।
मनोवचोभूघनचेष्टितानि स्पृशन्ति नासत्यविषं यकेषाम् ॥२४॥

प्लुष्टोऽप्यहो! प्रज्वलिताग्निना द्रुः सान्द्रीभवेद्, दुर्वचसा न लोकः।
वाक् सूनृता यं तनुते प्रमोदं न चन्दनं तं न च रत्नमाला ॥२५॥

विनश्वरी श्रीश्चपलाश्च भोगाः स्वार्थैकबद्धाः स्वजनाः समग्राः।
अतो मृषावाद उपासनीयः किमर्थमेषा सुधियां मनीषा ॥ २६ ॥

अप्रत्ययं यद् वितनोति लोके दुर्वासनानां ददते निवासम्।
दोषान् प्रसूते प्रबलान् क्रमेण तद् धर्मशीलो न वदत्यसत्यम् ॥२७॥

व्रतानि शेषाणि वदन्त्यहिंसासरोवरे पालिसमानि धीराः।
सत्यस्य भङ्गे सति पालिभङ्गादनर्गलं तत् खलु विप्लवेत ॥२८॥

स्वमन्यदीयं हरताऽधमेन दत्तः स्वधर्मोपवने प्रदाहः।
हृतं धनं स्वास्थ्यसुखं न सूते तस्मात् परिभ्रष्टमितस्ततोऽपि॥२९॥

दरिद्रता-दुर्भगता-शरीरच्छेदादिकं स्तेयफलं विलोक्य।
तत्र प्रवृत्तिव्यसनं समुज्झेत्, युक्तो ग्रहीतुं न तृणोऽप्यपृष्ट्वा ॥३०॥

अद्यापि नो दृष्टमिदं श्रुतं वा यत् स्तेयमालम्बितवान् मनुष्यः।
प्रभूतमानन्दमपेतशङ्कमभुक्त कोटीश्वरतां प्रपद्य ॥ ३१ ॥

यश्चौर्यपापद्रुमधिष्ठितोऽस्ति स्वास्थ्यं परं हारितवान् न, किन्तु।
धृतिं च धैर्यं च मतिं च सम्यग् जन्मान्तरं चापि स हीनभाग्यः॥३२॥

यो मार्यतेऽसौ क्षणमेक एव प्राप्नोति दुःखं द्रविणे हृते तु।
सपुत्रपौत्रोऽप्युपयाति यावज्जीवं विचिन्त्येति जहातु चौर्यम् ॥३३॥

स्तेयप्रवृत्तिः खलु नीचकार्यमस्तेयवृत्तिः पुरुषार्थमार्गः।
विशुद्धहस्तस्य च साधुवादः शाम्यन्त्यनर्थाश्च परत्र नाकम् ॥३४॥

यस्मिन् प्रदीपे शलभन्ति दोषा यस्मिन् सुधांशौ परितापशान्तिः।
यस्मिन् समुद्रे गुणरत्नभूतिस्तद् ब्रह्म को न स्पृहयेत् सचेताः?॥३५॥

यस्मिन् दिनेशे परितप्यमान उपद्रवध्वान्त उपैति नाशम्।
इष्टार्थसम्पादनकल्पवृक्षेऽस्मिन् ब्रह्मचर्ये सुधियो यतेरन् ॥३६॥

सिंहासने चोपविशन् सुरेन्द्रः प्रवन्दते यान् शुचिभक्तिनम्रः।
ते ब्रह्मचर्यव्रतबद्धचित्ता मनस्विना मर्त्यभुवां जयन्ति ॥ ३७ ॥

फलन्ति मन्त्रा वहते च कीर्त्तिरध्यासते सन्निधिमप्यमर्त्याः।
यस्मिन् सति प्रस्फुरितप्रभावे तद् ब्रह्मचर्यं सुविचारलभ्यम् ॥३८॥

अस्थ्नां प्रभूतं बलमर्पयन्तं रक्तप्रवाहं प्रविकासयन्तम्।
मुखे प्रतापारुणतां दधानं न कः सुधीर्ब्रह्मयमं सुरक्षेत्! ॥३९॥

न तं शरत्पर्वहिमांशुरोचिः प्रह्लादमुत्पादयितुं क्षमेत।
न तं रसं दिव्यफलानि चापि ह्लादं रसं ब्रह्म यमातनोति ॥४०॥

यत् प्राणभूतं मुनिधर्मलक्ष्म्या हेतुः परब्रह्मणि यच्च, यस्मात्।
निर्याति मेधा तटिनीव शैलात् तत् पालयन् ब्रह्म न पूज्यते
कैः ? ॥ ४१ ॥

इह प्रतिष्ठा च परत्र च स्वर्यस्माददो ब्रह्म विहाय, मार्गम्।
आपातमात्रे रमणीयमन्ते किम्पाकवद् दारुणमाश्रयेन्न ॥ ४२ ॥

देहे तपस्येव न तापहेतुर्हेतुर्न वा भक्तिरिव श्रमस्य।
स्वभावसिद्धो मनसः पवित्रीभावे स्थितो ब्रह्मयमश्चकास्ति ॥४३॥

परिक्षमन्ते गृहमेधिनस्तु न सर्वथाब्रह्ममहाव्रताय।
तद् देशतो ब्रह्मणि ते यतेरन् स्वदारतुष्टाः परदारवर्जाः ॥४४॥

यं स्वसारं जननीं सुतां वा स्वां कामदृष्ट्या समवेक्षमाणे।
क्रोधोपतापप्रभवं विचिन्त्य परस्य नार्य्यां न दृशौ क्षिपेत ॥४५॥

नहि स्वदारा अपि सेवितव्या आसक्तितः, किं पुनरन्यनार्य्यः।
नोत्सह्यते क्षेप्तुमितस्ततः स्वं ही! यत्यते पातयितुं तु रेतः॥४६॥

शुक्रः शरीरस्य समस्ति राजा हते पुना राज्ञि पुरस्य हानिः ।
रक्षेत् ततः कामशरेभ्य एनं ब्रह्मोच्चसन्नाहधरं विधाय ॥ ४७ ॥

कः प्रत्ययस्तत्र परं पुमांसं या सेवते स्त्री चपलाऽपलज्जा ।
विषस्य पानं दहने च पातो वरं परस्त्री न तु सेवनीया ॥४८॥

सर्वस्वनाशः प्रबलं च वैरं बन्धो वपुष्पातनसंशयार्त्तिः ।
परत्र घोरस्थलसङ्गमश्चाऽन्यस्त्रीप्रसङ्गस्य फलान्यमूनि ॥ ४९ ॥

शिरीषपुष्पाधिकमार्दवाङ्गीं समुच्छलत्सुन्दरकान्तिपूराम् ।
समुल्लसत्पङ्कजगन्धि-पर्वशरत्सुधाधाममनोहराऽऽस्याम् ॥ ५० ॥

एवंविधां प्रौढकलाकलापामपि त्यजेद् योषितमन्यदीयाम् ।
साधारणस्त्रीमपि कालकूटवल्लीं परिज्ञाय विवेकशाली ॥ ५१ ॥

युग्मम् ।

मनःप्रवृत्तिर्वचसः प्रवृत्तिर्देहप्रवृत्तिश्च मिथो विभिन्नाः ।
यासां न साधारणयोषितस्ता निषेविताः स्युः सुखसम्पदायै ॥५२॥

वेश्यानुषक्तः पुरुषः किलाऽसत्सङ्गप्रसङ्गाभिरतो विवेकात् ।
तथाविधं भ्रश्यति येन देवान् न मन्यते नापि गुरूंश्च बन्धून् ॥५३॥

द्रव्येच्छया कुष्ठिनमप्यमर्त्योपमं परिस्निग्धदृशेक्षते या ।
स्नेहोज्झितां तां सृजतीमसत्यस्नेहं न गच्छेद् गणिकां कदापि ॥५४॥

रूपं यदेव प्रविलोक्य माद्यन्नाभ्यन्तरं तस्य यदि स्वरूपम् ।
विचिन्तयेत् तत्त्वदृशा, न तर्हि भवेत् स्मरान्दोलितचित्तवृत्तिः॥५५॥

पराङ्गनासङ्गमपातकाग्नौ सर्वे गुणा आहुतिमाप्नुवन्ति ।
अतः परं किञ्चन नास्ति मौर्ख्यमतः परं नाप्यधमं चरित्रम् ॥५६॥

पुंसः सतीदं प्रतिपाद्यते स्म यद् ब्रह्मचर्यं वनिताजनोऽपि ।
तात्पर्यतस्तत् क्षमते ग्रहीतुं निजस्थितिं चेतसि लक्षयित्वा ॥५७॥

परिग्रहाद् मूर्च्छेति, मूर्च्छनाम्ना कर्मप्रबन्धा इति सम्प्रवीक्ष्य ।
परिग्रहं सर्वमपि त्यजन्ति द्रव्यादिरूपं मुनयोऽपसङ्गाः ॥५८॥

गृहस्थभावो मुनिता च भिन्ने परिग्रही तन्न मुनिर्गृहीव।
परिग्रहाऽऽसक्तमुनेर्मुनित्वे भवेन्न कस्माद् गृहिणां मुनित्वम् ? ॥५९॥

निन्द्यो गृही स्यादपरिग्रहत्वे निन्द्यो मुनिः स्यात् सपरिग्रहत्वे।
द्रव्योपभोगे मदनप्रसक्तेरपि प्रचारस्य न दुर्वचत्वम् ॥ ६० ॥

द्रव्यग्रहे लाभदृशापि मूलक्षतिं विनाऽन्यन्न वदन्ति सन्तः।
संसारदुर्वातनिरोधहेतुः सुनिश्चितं साध्वपरिग्रहत्वम् ॥ ६१ ॥

गृहस्थवर्गस्त्वपरिग्रहत्वमध्यासितुं न प्रभविष्णुरस्ति।
अतः स कुर्वीत परिग्रहस्य प्रमाणमाशाप्रसरावरोधि ॥ ६२ ॥

परिग्रहस्याऽस्खलितप्रचारे तृष्णा प्रचारं लभते नितान्तम्।
ततो जनः पोत इवाम्बुराशौ भवे निमज्जेदिति चिन्तनीयम् ॥६३॥

परिग्रहस्यातिवशीभवन्तं मुष्णन्ति चौरा विषयाभिधानाः।
दहत्यनङ्गो दहनः कषायव्याधा निरुन्धन्ति पुनः समन्तात् ॥६४॥

पापस्य वल्लीमसुखस्य खानिं दोषावलीमातरमाहुराशाम्।
आशोर्मयस्तत्र चरन्ति वेगाद् न यत्र भासः शशिनो रवेश्च ॥६५

आक्रान्तविश्वत्रितयोऽपि लोभपयोनिधिस्तैः प्रसरन् निरुद्धः।
यमोंऽशतोऽप्येष समाश्रितो यैरेवंविधाः स्युर्गृहिणोऽपि धन्याः ६६

आरम्भभारा भववृक्षमूलं परिग्रहः कारणमस्त्यमीषाम्।
तस्मादवश्यं नियतप्रमाणं परिग्रहं संविदधीत गेही ॥ ६७ ॥

एतानहिंसादियमान् स्वशक्तेरर्हन्ति सम्पालयितुं समग्राः।
धर्मोऽस्त्ययं सार्वजनीन एव स्वाभाविकी जीवननीतिरेषा ॥६८॥

उक्ता अहिंसादियमा अमी दिक्कालाद्यवच्छिन्नतया विमुक्ताः।
महाव्रतं सन्ति च सार्वभौमा वितर्कबाधे प्रतिपक्षचिन्ता ॥६९॥

वितर्कबाधे प्रतिपक्षचिन्तनाद् योगस्य सौकर्यमवेक्ष्य योगिनः।
यमेषु योगस्य बभाषिरेऽङ्गतां विज्ञापनेता प्रथमं हि युज्यते ॥७०॥

हिंसादयः सन्ति वितर्कसञ्ज्ञकाः प्रत्येकमेते खलु सप्तविंशतिः ।
कृतानुमोदास्पदकारिता हि ते क्रोधाच्च लोभाच्च तथैव मोहतः ॥७१॥

नवेति भेदा मृदु-मध्य-तीव्रैर्भेदैस्त्रिभिः सन्ति यथोक्तसंख्याः ।
प्रत्येकमेते मृदुमध्यतीव्रास्त्रिधा पुनः स्युर्मृदुमध्यतीव्रैः ॥ ७२ ॥
युग्मम् ।

अनन्तमज्ञानमनन्तदुःखं फले अमीषां नितरां विभाव्ये ।
अतः प्रकर्षं समुपेयुषां यत् फलं यमानामभिधीयते तत् ॥ ७३ ॥

दयाव्रतस्थैर्यवतः पुरस्ताद् निसर्गवैरा अपि देहभाजः ।
मिथः प्रशाम्यन्ति तदेवमाद्ये व्रते फलं योगबुधा अवोचन् ॥७४॥

सत्यव्रते प्राप्तवति प्रतिष्ठां फलं प्रसिध्यत्यकृतेऽपि यत्ने ।
स्यादस्य वाचा च फलं परस्याऽनुधच्छतोऽपीति फलं द्वितीये॥७५॥

अस्तेयनामव्रतनिश्चलत्वे भवन्ति रत्नानि न दुर्लभानि ।
प्रतिष्ठिते ब्रह्मणि वीर्यलाभोऽपरिग्रहे जन्मकथन्त्ववबोधः ॥७६॥

---

योगदृष्टिः ।

अष्टौ च योगस्य वदन्ति दृष्टीरष्टाभिर : सह ताः क्रमेण ।
सुश्रद्धया सङ्गत एव बोधो दृष्टिर्विभाषे प्रथमाऽत्र मित्रा ॥ ७७ ॥

मन्दं च मित्रादृशि दर्शनं स्यात् तृणानलोद्द्योत इहोपमानम् ।
न देवकार्यादिषु खेदवृत्ती रोषप्रसङ्गोऽपि च नापरत्र ॥ ७८ ॥

श्रीवीतरागे कुशलं मनोऽस्मै नमश्च पञ्चाङ्गतया प्रणामः ।
संशुद्धमेतत् किल योगबीजं गृह्णाति दृष्टाविह वर्त्तमानः ॥७९॥

न केवलं तत् खलु वीतरागे मुनिप्रवेकेष्वपि शुद्धरूपम् ।
तेषां विशुद्धाशयतश्च सेवाऽऽहारप्रदानादिबहुप्रकारैः ॥ ८० ॥

उद्विग्नता चात्र भवाम्बुराशेः सामान्यतोऽभिग्रहपालनं च।
श्रीधर्मशास्त्रेषु समादरश्च श्रद्धा च बीजश्रवणे प्रभूता ॥ ८१ ॥

एवं च दृष्टाविह वर्त्तमानः कृपापरो दुःखिषु, निर्गुणेषु।
अद्वेषकश्चोचितसम्प्रवृत्तिर्योगप्रवीणैः कथयाम्बभूवे ॥ ८२ ॥

दुर्बोधघर्मे विपुलोऽम्बुवाहो दुर्वर्त्तनद्रौ निशितः कुठारः।
सत्सङ्गतिर्या मुनिभिर्न्यगादि तत्प्राप्तिरत्र प्रगतेर्निदानम् ॥ ८३ ॥

अन्त्ये परावर्त्त इमां च दृष्टिं कल्याणरूपां लभते सुभागः।
हेतुः परो भावमलाल्पताऽत्र घने मले सत्सु न सत्त्वबुद्धिः ॥८४॥

यथाप्रवृत्तौ करणेऽन्त्य ईदृग् आसत्तिमद्ग्रन्थिभिदः स्वरूपम्।
अपूर्वतां तेन यथाप्रवृत्तेरासन्नभावेन बुधा अवोचन् ॥ ८५ ॥

चतुर्दशोक्तानि जिनागमे गुण-स्थानानि, तत्र प्रथमं निगद्यते।
समागतस्य प्रथमामिमां दृशं शास्त्रे तु सामान्यत एव वर्णितम् ॥८६॥

यमप्रधाना प्रथमा दृगुक्ता तारा द्वितीया नियमप्रधाना।
शौचस्य सद्भावनया च तत्र घृणा स्वदेहेऽन्यशरीरसङ्गः ॥८७॥

सुसत्त्वसिद्धिः सुमनस्कभाव एकाग्रभावो जय इन्द्रियाणाम्।
आत्मस्वरूपेक्षणयोग्यता च फलान्यमूनि प्रतिपादितानि ॥८८॥
युग्मम्।

सन्तोषतोऽनुत्तमसौख्यलाभः स्वाध्यायतो दर्शनमिष्टदेवे।
*तपेन कायेन्द्रिययोश्च सिद्धिः प्रोक्ता समाधिः प्रणिधानतश्च ॥८९॥

अस्यां च तारादृशि गोमयाग्नि-कणोपमं दर्शनमूचिवांसः।
[illegible] ऽत्र हितप्रवृत्तौ तत्त्वावबोधस्य पुनः समीहा ॥९०॥

* अकारान्तोऽप्यस्ति।

प्रीतिस्त्वविच्छिन्नतयाऽत्र योग-कथासु भक्तिर्महती च सत्सु ।
भयं न तीव्रं भवतस्तथाऽनाभोगेऽपि नात्यर्थमयोग्यकर्म ॥ ९१ ॥

त्रासः स्वकीये विकले च कृत्येऽधिकेऽधिकस्थे च विबोद्धुमिच्छा ।
दुःखप्रहाणाय सतां प्रयत्नं नानाविधं वीक्ष्य कथन्त्वबुद्धिः ॥९२॥

नास्माकमुच्चैःप्रतिभाप्रकाशो ग्रन्थाः पुनः सन्ति सुविस्तरेण ।
शिष्टाः प्रमाणं तदिहेत्यमुष्यां दृष्टौ सदा तिष्ठति मन्यमानः ॥९३॥

यत्राऽऽसनं नाम सुख-स्थिरं स्याद् दृष्टिर्बला सा विदिता तृतीया ।
दृढं च काष्ठाग्निकणप्रकाशसमं भवेद् दर्शनमत्र दृष्टौ ॥ ९४ ॥

महांश्च तत्त्वश्रवणाभिलाषः क्षेपो न योगस्य पथि प्रयाणे ।
असाधुतृष्णा-त्वरयोरभावात् स्थिरं सुखं चाऽऽसनमाविरस्ति॥९५॥

अतोऽन्तरायाः शममाप्नुवन्ति द्वन्द्वाभिघातो न च सम्भविष्णुः ।
अपायदूरीभवनेन कृत्यं भवेत् समस्तं प्रणिधानपूर्वम् ॥ ९६ ॥

यूनः सकान्तस्य विदग्धबुद्धेर्यो दिव्यगेयश्रवणेऽभिलाषः ।
तत्कोटिमारोहति तत्त्वविद्यासुधासमास्वाद इहाभिलाषः ॥९७॥

असत्यमुष्मिन् श्रुतमप्यपार्थमिवोषरायां भुवि बीजवापः ।
सति त्वमुष्मिन्नसति श्रुतेऽपि निःसंशयं कर्मपरिक्षयः स्यात् ॥९८॥

तुर्याऽन्विता प्राणयमेन योगोत्थानेन मुक्ता दृगवादि दीप्रा ।
अस्यां च तत्त्वश्रवणप्रवृत्तिर्न सूक्ष्मबोधः पुनरत्र भाति ॥ ९९ ॥

यः श्वास-प्रश्वासगतिप्ररोधः स योगिभिः प्राणयमो बभाषे ।
स रेचकः पूरक-कुम्भकौ च श्वासो बहिर्वृत्तिरिहाऽऽदिमः स्यात्
॥ १०० ॥

प्रपूरणं यत् पुनरस्य पूरकः स्थिरत्वसम्पादनमेव कुम्भकः ।
नैकस्वभावाः खलु योगसाधका गच्छन्ति केचित् तत ईदृशा पथा
॥ १०१ ॥ ( युग्मम् )

स्याद् भावतः प्राणयमस्तु बाह्यभावस्य रेकाद् अथ पूरणेन ।
अन्तःस्वभावस्य, यथार्थतत्त्वधीकुम्भनाद्, उत्तममेतदङ्गम् ॥१०२॥

प्रीतोऽपि मित्रादपि पुत्रतोऽपि धर्मः प्रियः स्यादिह प्राणतोपि।
धर्माय प्राणानपि* विक्षिपेत प्राणान्तकष्टेऽपि न तु त्यजेत् तम्॥१०३॥

एवं भवक्षारपयोनिरासात् तत्त्वश्रुतिस्वादुजलेन पुण्यम् ।
बीजं प्ररोहप्रवणं करोति सम्यञ्मतिः सद्गुरुभूरिभक्तिः ॥१०४॥

मिथ्यात्वमस्मिंश्च दृशां चतुष्केऽवतिष्ठते ग्रन्थ्यविदारणेन ।
ग्रन्थेर्विभेदो भवति स्थिरायां तद् दृक्चतुष्केऽत्र न सूक्ष्मबोधः॥१०५॥

अवेद्यसंवेद्यपदाभिधेयं मिथ्यात्वदोषाशयमूचिवांसः ।
तस्य प्रभावेण कृतावकाशा कृत्येष्वकृत्येष्वविवेकबुद्धिः ॥१०६॥

अवेक्षमाणा अपि जन्म-मृत्यु-जराऽऽमयोपद्रवदुःखपूर्णम् ।
संसारमल्पेतरमोहदोषात् समुद्विजन्ते नहि देहभाजः ॥ १०७ ॥

अवेद्यसंवेद्यपदं चतुष्के दृशाममूषामपि वर्त्तमानम् ।
सत्सङ्गतस्तस्य विनिर्जयेन स्वतोऽपयात्येव कुतर्कराहुः ॥१०८॥

शमाम्बुवाहे प्रतिकूलवातं सद्बोधपद्मे च हिमोपपातम् ।
श्रद्धानशल्यं स्मयकारणं च प्रचक्षते योगविदः कुतर्कम् ॥१०९॥

वादस्य मार्गाः प्रतिवादमार्गा नानाविधाः सन्ति सतां सभासु ।
तत्त्वान्तमाप्नोति न खल्वमीभिर्दृष्टान्त आस्ते तिलपीलकोऽत्र॥११०॥

एकेऽभियुक्ता असुकं पदार्थं यथाऽनुमानैः परिकल्पयन्ति ।
अन्येऽभिरूपा अमुमेव भावमन्यस्वरूपं प्रतिपादयन्ति ॥१११॥

अतीन्द्रियार्था यदि हेतुवादैर्विनिश्चयाध्वानमधिश्रयेयुः ।
एतावतः कालत एव तेषु सुनिश्चयः प्राज्ञवरैः कृतः स्यात् ॥११२॥

तस्मात् कुतर्कग्रह उज्झितव्यो नानेन कोऽप्यस्ति फलोपलम्भः ।
मध्यस्थभावे च कृतावकाशो सम्यग्दृशां सम्भविता विकासः॥११३॥

दृशः सन्ति चतस्र एताः स्थिरा च कान्ता च प्रभा परा च ।
स्याद्दृतिस्तत्र भवेत् स्थिरायां स्याद् दर्शनं भ्रान्तिविवर्जितं च
॥ ११४ ॥

* छन्दोभङ्गो नात्र सम्भाव्यः । अन्यत्रापीदृक्षु स्थलेषु ।

प्रत्याहृतेर्ग्रन्थिविभेदनेन स्फुरद्विवेकोज्ज्वलमानसानाम् ।
संसारचेष्टा प्रतिभाति बालधूलीगृहक्रीडनसन्निभैव ॥ ११५ ॥

तत्त्वं परं ज्योतिरिह ज्ञरूपं वैकल्पिकः सर्व उपप्लवोऽन्यः ।
एवं च भोगो भवभोगिभोगाऽऽभोगस्वरूपः प्रतिभासतेऽत्र ॥११६॥

रत्नप्रभाया उपमोदिताऽत्र सूक्ष्मावबोधस्य समन्वयोऽपि ।
प्रत्याहृतिः सा पुनराचचक्षे समाहृतिर्याऽर्थत इन्द्रियाणाम् ॥११७॥

अवेद्यसंवेद्यपदाद् विरुद्धं स्याद् वेद्यसंवेद्यपदं स्थिरायाम् ।
एतत् पुनर्ग्रन्थिविदारणोत्थं रुचिप्रकारं मुनयो वदन्ति ॥११८॥

ततश्च कान्तादृशि संप्रवेशस्ताराप्रभाभं ध्रुवदर्शनं च ।
चित्तस्य देशे स्थिरबन्धनं यत् तां धारणामत्र वदन्ति सन्तः॥११९॥

स्थिरस्वभावादिह नान्यमुच्च मीमांसनाया अपि संविकासः ।
सम्यक्स्थितः स्यादथ धारणायां लोकप्रियो धर्मसुलीनचेताः ॥१२०॥

मायाजलं तत्त्वत ईक्षमाणोऽनुद्विग्न एत्याशु यथाऽस्य मध्यात् ।
भोगान् स्वरूपेण तथैव मायाऽम्बुवद् विदन् भुङ्क्त उपैति मोक्षम्
॥१२१॥

न धर्मशक्तिं प्रबलाममुष्यां भोगस्य शक्तिः क्षमते विहन्तुम् ।
दीपापहो गन्धवहो ज्वलन्तं दवानलं नेतुमलं शमं किम् ? ॥१२२॥

मीमांसना दीपिकया समाना मोहान्धकारक्षपणेऽत्र भाति ।
तत्त्वप्रकाशप्रसरेण तेनाऽसमंजसस्याऽपि कुतः प्रचारः ? ॥१२३॥

दृष्टिः प्रभाऽर्कद्युतितुल्यबोधा ध्यानैकसारा रहिता रुजा च ।
प्रवर्त्तते ध्यानसमुद्भवं शं शमप्रधानं स्ववशं गरिष्ठम् ॥ १२४ ॥

सर्वं भवेद् अन्यवशं हि दुःखं सर्वं भवेद् आत्मवशं च सौख्यम् ।
सुखासुखं वस्तुत एतदुक्तं गुणोऽत्र तत्त्वप्रतिपत्तिरूपः ॥ १२५ ॥

या धारणाया विषये च प्रत्ययैकतानताऽन्तःकरणस्य तन्मतम् ।
ध्यानं, समाधिः पुनरेतदेव हि स्वरूपमात्रप्रतिभासनं मतः १२६

असङ्गवृत्त्याख्यकसत्प्रवृत्तिपदं प्रभायां लभते मुनीन्द्रः ।
प्रशान्तवाहित्वमपीदमेवेदमेव नामान्तरतोऽन्य आहुः ॥ १२७ ॥

दृष्टिः परा नाम समाधिनिष्ठाऽष्टमी तदासङ्गविवर्जिता च ।
सात्मीकृताऽस्यां भवति प्रवृत्तिर्बोधः पुनश्चन्द्रिकया समानः ॥१२८॥

अस्यां निराचारपदो मुनीश्वरः श्रीधर्मसंन्यासबलेन केवलम् ।
लब्ध्वोत्तमं योगमयोगमन्ततः प्राप्यापवर्गं लभतेऽस्तकर्मकः ॥१२९॥

तृणगोमयकाष्ठहव्यभुक्-
कणदीपप्रभयोपमीयते ।
अथ रत्न-भ-भानु-चन्द्रमः-
प्रभया बोध इह क्रमात् पुनः ॥ १३० ॥

खेदादिदोषा इह निर्गतास्तथाऽ
द्वेषादिका अष्ट गुणाः श्रिताः क्रमात् ।
इत्येवमङ्गाष्टकमष्टकं दृशां
संक्षेपतोऽदर्शयत योगिसम्मतम् ॥१३१॥



# चतुर्थ-प्रकरणम् ।

## कषायजयः ।

आत्मस्वरूपं प्रथमं प्रविद्युर्योगश्रियां प्रोत्सहमानचित्ताः ।
स एव योगस्य यदस्ति भूमिराकाशचित्रोपममन्यथा स्यात् ॥१॥

आत्मक्षेत्रे योगतः कृष्यमाणे सम्यग्रूपैः सन्ततं प्रौढयत्नैः ।
सम्पद्यन्तेऽनन्तविज्ञानवीर्याऽऽनन्दा नास्ते संशयस्याऽत्र लेशः ॥२॥

इदं पदार्थद्वितये समस्तमन्तर्भवन्न व्यतिरिच्यतेऽतः ।
जडस्तथा चेतन इत्यमू द्वौ, जडेन चैतन्यमुपावृतं नः ॥ ३ ॥

प्रसिद्धमेतच्च जडस्य योगात् क्लेशान् विचित्रान् सहते सदाऽऽत्मा ।
विवेकबोधे प्रतिभाति देहाद् दुःखातिथिः स्यात् कुत एष आत्मा ? ॥ ४ ॥

संक्लेशानामेकमेवास्ति मूलमात्माज्ञानं तच्च धीरा वदन्ति ।
आत्माज्ञानोद्भूतदुःखं प्रणश्येद् आत्मज्ञानाद्, अन्यथा नो तपोभिः ॥ ५ ॥

संसार आत्मैव जितः कषायेन्द्रियैः स एवेतरथा च मोक्षः ।
क्रोधादयस्तत्र कषायसञ्ज्ञाश्चत्वार उक्ता भववृक्षमेघाः ॥ ६ ॥

यो वैरहेतुः परितापकारणं शमार्गला दुर्गतिवर्त्तनी पुनः ।
उत्पद्यमानः प्रथमं स्वमाश्रयं दहेद् दहेद् वन्हिरिवापरं न वा ॥७॥

क्रोधस्य तस्य प्रशमे क्षमा क्षमा क्षमाऽऽत्मसाम्राज्यपरिस्पृहावताम् ।
या संयमाऽऽरामविशालसारणिः क्लिष्टाघभूमीधरभेदनाशनिः ॥८॥
युग्मम् ।

क्रोधः प्रसिद्धो मृदुमध्यतीव्राद्यनेकभेदैः सकलानुभूतौ ।
यादृक्स्वरूपः स उदेति तादृग्रसानुविद्धं चितनोति कर्म ॥९॥

योगस्य पन्थाः परमस्तितिक्षा सा क्रोधदावानलमेघवृष्टिः ।
यस्तामृतेऽभीप्सति योगलक्ष्मीं हलाहलाद् वाञ्छति जीवितं सः ॥१०

निशम्य दुर्भाषितमन्यदीयं नातन्वते रोषमुदारचित्ताः ।
सम्पादनीयः सहनस्वभावः शाठ्यं शठाग्रे नहि कर्तुमर्हम् ॥११॥

क्रोधं च कस्माद् विदधीत योगी? दुर्भाषितैः स्यान्न हि कोपि रोगः।
न वा यशःश्रीर्लभते विलोपं द्रव्यस्य हानेरपि नास्ति वार्त्ता ॥१२॥

रोषेण वैरं लभतेऽवकाशं वैरात् पुनः सत्त्वगुणप्रहाणिः ।
एवं स्खलेत् सञ्चरमाण आत्मोन्नत्यध्वना रोषसमाश्रयेण ॥१३॥

रुष्यज्जनं प्रेरयतेऽस्मदीयं प्राचीनकर्मेत्यथ चिन्तनीयम् ।
पराश्रये रुष्यति वा प्रकोपः प्रयोजके कर्मणि वा विधेयः? ॥१४॥

कृतापराधे यदि नाम कोपो न कर्म किं तर्हि कृतापराधम् ?।
एतत् प्रभासेत विचार्यमाणं सर्वेऽपराधाः खलु कर्मराजः ॥१५॥

त्रैलोक्यचूडामणयोऽपि देवाधिदेवतास्ताडन-तर्जनादि ।
वितेनुषः क्षान्तिभरैरपश्यन् क्षमा तदेवं न हि किं क्षमा नः?॥१६॥

प्रकम्पमानोष्ठक-रक्तनेत्र-प्रस्वेदसंक्लिन्नमुखारविन्दम् ।
क्रुध्यन्तमालोक्य विचारशीलैर्ज्वरीव मान्यःकरुणाऽऽस्पदं सः॥१७॥

ज्वरातुरे कुर्वति दुर्वचांसि यथा न कोपः क्रियते दयातः ।
तथा दयादृष्टित एव दृश्यः क्रोधज्वराद् दुर्वचनानि कुर्वन् ॥१८॥

वनस्पतित्वे च पिपीलिकात्वे समागतोऽनेकश एष आत्मा ।
तदाऽभिमानो गलितोऽस्य कुत्र न सह्यते सम्प्रति दुर्वचो यत्?॥१९॥

आक्रोशशान्तिर्मधुरैर्वचोभिराक्रोशतोऽसौ पुनरेति वृद्धिम् ।
प्रदीपनस्य प्रशमाय वारि क्षिपन्ति नोत्तेजकमिन्धनादि ॥२०॥

दूरीकृताः सम्पद उज्झिता स्त्री नीतः समग्रः स्वजनोऽप्युपेक्षाम् ।
[illegible] किमर्थं तथाप्यसौ चेद् हतभागतेयम् ॥ २१ ॥

[illegible]ऽस्त्यस्मदीयो भुवनत्रयेऽपि कर्तुं क्रुधं यत्र किलाधिकारः ?।
संसर्ग एषोऽस्ति च कर्मकल्प्यो न्याय्यं प्रकोपाचरणं न तस्मात् ॥२२॥

स्थातव्यमत्रास्ति कियद्दिनं यत् कोपाग्निना प्रज्वलनं क्षमं स्यात् ?।
यद्यैहिकार्थे क्षम एव कोपः पारत्रिकार्थे प्रशमो न तर्हि ? ॥२३॥

यमान् कुरुध्वं नियमान् कुरुध्वं क्रियां कुरुध्वं च तपः कुरुध्वम् ।
न चेत् समस्ति प्रशमावगाहः काऽऽशा तदेभ्यः फलमुच्चमाप्तुम्?
॥ २४ ॥

मनश्च वाचा च वपुश्च यस्याऽवगाहते क्षान्तिसुधासमुद्रे ।
धन्यः कृतार्थः सुकृती महात्मा कलावपि प्रेक्ष्यमुखाम्बुजोऽसौ ॥२५॥

क्रोधान्धलीभूय यदेव कार्यं करोति सद्यो विपरीतरूपम् ।
तदेव कोपोपरमे त्रपायै दुःखाय च स्याद्, धिगहो ! अविद्या ॥२६॥

आक्रोशने वा परिताडने वा योगप्रवाहे स्थितवानृषिस्तु ।
ध्यायेद्–'न मे किञ्चन नाशमेति सच्चित्स्वरूपं मम निश्चलं यत्'
॥२७॥

उच्चस्वरूपः प्रकटो यदा स्याद् देहाऽऽत्मनोर्भिन्नतया प्रकाशः ।
छिन्ने च भिन्ने च तदा शरीरे नाऽत्मा भवेत् स्वात्मरतो विकारी
॥२८॥

क्रिया सुसाधा च तपः सुसाधं ज्ञानं सुसाधं नियमाः सुसाधाः ।
दुःसाध एकः स च कोपरोधः स साधितः साधितमप्यशेषम् ॥२९॥

रोषो विधातुं न हि यत्र तत्र युक्तो गृहस्थैरपि वेदितव्यम् ।
सर्वत्र सर्वेष्वपि घोषयामः– क्रोधस्य मन्दीकरणन्तु युक्तम्॥ ३० ॥

अनेकशास्त्राणि विलोकितानि रहस्यमध्यात्मगिरां च लब्धम् ।
तथापि लब्धा यदि नो तितिक्षा ज्ञेयस्तदाऽसौ हृदयेन मूर्खः ॥३१॥

यावन्न मानादिकदूषणानां रुद्धः प्रचारो नहि तावदेषः ।
शक्यः समापादयितुं निरोधं मानादिदोषा अपि तेन हेयाः ॥३२॥

विवेकनेत्रं हरताऽस्मदीयं मानेन तीव्रो विहितोऽपराधः ।
न स्पृश्यते तच्छूयणं तथापि सम्मूढता कीदृगतः परं स्यात् ?॥३३॥

सभ्यत्वदुग्धं यदि रक्षणीयं तद् दर्पसर्पेण न सङ्गतं स्यात् ।
विद्यासुधादीधितिशीतभासो मानाभ्रविक्षेपणतः स्फुरन्ति ॥३४॥

मानः पदार्थे क्व विधातुमर्हं इत्येव सम्यग् हृदि चिन्तनीयम् ।
प्रत्यक्षमालोकयत एव विश्वे कुतोऽपि कोऽप्यस्त्यधिको हि मर्त्यः ॥३५॥

अनन्यसाधारणबुद्धिमत्त्वमनन्यसाधारणशक्तिमत्त्वम् ।
अनन्यसाधारणभाषकत्वं क्वाऽस्मासु कुर्याम यतोऽभिमानम् ॥३६॥

न श्रीः प्रसन्ना प्रविकासिदृग्भ्यां न भारती दत्तवती वरं च ।
अलौकिकं कर्म कृतं न किञ्चित् तथाप्यहो ! दर्पसमुद्धतत्वम् ! ॥३७॥

न धीरिमा वा न गभीरिमा वा न सासहित्वं न परोपकारः ।
महान् गुणो वा नहि कोऽपि तादृक् तथापि गर्वः किमतः प्रहास्यम् ?
॥ ३८ ॥

रूपेण शक्रप्रतिमोऽपि मर्त्यः कालान्तरे म्लानिमुपैति रोगैः ।
राज्ञोऽपि रङ्कीभवनं स्फुटं च कस्तर्हि मानाचरणे मतोऽर्थः? ॥३९॥

सामान्यवर्गः खलु लक्षनाथमसौ च कोटीशमसौ च भूपम् ।
असौ च सम्राजमसौ च देवमसौ च देवेन्द्रमसौ मुनीन्द्रम् ॥ ४० ॥

असौ च सर्वज्ञतया विभान्तमसौ च विश्वत्रितयेशितारम् ।
सम्यक्तया यद्यवलोकयेत कुतस्तदोन्मादकताऽवकाशः ? ॥ ४१ ॥
युग्मम् ।

यत्पादपद्मे मधुपन्ति सर्वे सुरेश्वरास्ते जगदीशितारः ।
दर्पोष्मलेशादपि सम्प्रमुक्ताः किं नः क्षमस्तर्ह्यभिमानलेशः? ॥४२॥

निमील्य नेत्रे हृदयं निवेश्य प्रशान्ततायां परिचिन्तनायाम् ।
स्वयं त्रपाया* अभिमानचेष्टा संजायतेऽत्रानुभवः प्रमाणम् ॥४३॥

[illegible] च तपःसुधादीधितिराहुणा च ।
यो जनः सञ्चरतेऽभिमानाध्वना स धन्यः सुरगेयकीर्त्तिः ॥४४॥

* चतुर्थी ।

भवस्वरूपं परिचिन्त्य तस्माद् निवार्यतां मानभुजङ्गमोऽयम् ।
नैवाऽमृतं तत्सहचारितायां भवेत् परं मोहविषोपभोगः ॥ ४५ ॥

माया मता योगलताहुताशो ज्ञानार्गला दुर्भगतानिदानम् ।
आत्मार्थिना सद्व्यवहारलक्ष्मीस्पृहावता वा परिहीयतां सा ॥४६॥

पदे पदे दम्भमुपासते ये लक्षाधिपास्ते भुवि वीक्षिताः किम् ? ।
न न्यायतः किं व्यवहारवृत्तिर्यत् स्वाय दम्भाचरणं क्षमं स्यात् ?
॥ ४७ ॥

न्यायप्रतिष्ठः पुरुषो भवेच्चेद् व्यापारतोऽसौ नियमात् सुखी स्यात् ।
न्यायस्य मार्गेण वरं बुभुक्षा नाऽन्यायमार्गेण परं प्रभुत्वम् ॥४८॥

कौशल्यमाबिभ्रति सात्त्विकं ये न्यायप्रतिष्ठा विकसद्विवेकाः ।
पापास्पदं ते प्रविदन्ति मायां विनैव तां स्वार्थमुपार्जयन्ति ॥४९॥

अनेकशः पश्यति सर्वलोकः कृतेऽपि दम्भाचरणे प्रकृष्टे ।
अर्थो न सिद्धिं लभते, तदेवमर्थस्य सिद्धौ स कुतो निमित्तम् ?॥५०॥

इयं च माया जननी तदीया यः सर्वदोषेषु पुरःसरोऽस्ति ।
आख्या मृषावाद इतीदमीया न सज्जनः सेवति तेन मायाम् ॥५१॥

अप्रत्ययानां प्रसवस्य भूमीमपारसन्तापसमर्पयित्रीम् ।
शल्यं महच्चेतसि कः सुमेधा मायामुपासीत विवर्जनीयाम् ? ॥५२॥

कुर्वन्ति ये दुःखि मनः परस्य प्रतारणातो बहुभिः प्रकारैः ।
पुष्णन्ति हिंसाविषवल्लरीं ते दूरे दयाऽऽरामत ईदृशः स्युः ॥५३॥

पिपीलिकादीन् लघुदेहभाजो रक्षन्ति यत्नैर्मनुजान् पुनर्ये ।
प्रपातयन्त्यापदि वञ्चयित्वा दयालवस्ते न हि, किन्तु पापाः॥५४॥

अस्त्येकतो वञ्चनतत्परत्वं देवस्तुतौ गर्जनमन्यतश्च ।
एतादृशा नो किमपि त्रपन्ते कृतेन सम्यक् तिलकेन भाले॥५५॥

प्रवञ्चकत्वे सति सन्निपातेऽनुष्ठानदुग्धं विकृतिं प्रयाति ।
उत्सृज्य मायां विशदीकृतायां मनोभुवां बीजकमङ्कुराय ॥५६॥

५

संसारसिन्धोः परिलङ्घनार्थमध्यात्मपोते बहुभागलभ्ये।
चेद् छिद्रलेशोऽपि हि दम्भनामा न तर्हि तत्पारगतिस्ततः स्यात् ५७

वने हुताशः कलहः सुहृत्त्वे रोगः शरीरे कमले हिमं च।
यथा तथा दम्भ उपप्लवोऽयं धर्मेऽवसेयः सुविचारवद्भिः ॥५८॥

प्रयोजनं किं नु मुनिव्रतानां दम्भो यदेभिः परिषेवितव्यः ?।
दम्भावकाशो नहि सत्प्रवृत्तावसत्प्रवृत्तौ पुनरुच्यते किम् ? ॥५९॥

एकान्ततो नानुमतिर्मुनीशां न वा निषेधोऽस्त्यपवादतस्तत्।
क्वापि प्रसङ्गे नहि दम्भवृत्तिर्युक्ता विधातुं भयमस्ति कस्मात् ? ॥६०॥

अहो! समालम्ब्य बकप्रवृत्तिं प्रवञ्चकैर्वञ्च्यत एष लोकः।
परन्त्वमीभिः प्रविचारणीयं प्रवञ्चितः स्याद् निजचेतनोऽपि ॥६१॥

निःशल्यभावव्रतपालनस्योपदेशधारां ददिरे मुनीन्द्राः।
एवं हि योगैकपदीप्रवेशः, किं भूरिणा, शास्त्ररहस्यमत्र ॥६२॥

लुण्टाक एकः खलु मोक्षमार्गे सम्प्रस्थितानां सुमहाशयानाम्।
स लोभनाम्ना जगति प्रसिद्धो मोहस्य राज्ञः प्रथमः प्रधानः ॥६३॥

संसारमूलं किल लोभ एको मोक्षस्य मूलं तदभाव एकः।
एतद्धि संसार-विमुक्तिमार्गे दिग्दर्शनं योगबुधा अकार्षुः ॥६४॥

सुदुर्जयानां प्रथमोऽस्ति लोभस्तस्मिन् जिते किं न जितं त्रिलोक्याम्?
लोभस्य घाते हत एव मोहः क्रोधादिनाशेऽप्यवशिष्यतेऽसौ ॥६५॥

लोभोऽस्ति चिन्तालतिकासु कन्दो रक्षो गुणानां कवलीकृतौ च।
महांश्च विघ्नः पुरुषार्थसिद्धौ जयत्यमुं सत्त्वसमुद्रचेताः ॥ ६६ ॥

चेत् सात्त्विकस्ते पुरुषाभिमानो लोकाग्रणीत्वे यदि चायियासा।
परिस्फारय तर्हि लोभ-वप्रं प्रभङ्क्तुं पुरुषार्थमुच्चैः ॥६७॥

स्वेच्छया पूरयितुं क्षमन्ते न शाकतोऽपि स्वककुक्षिरन्ध्रम्।
आन्दोलितान्तःकरणा नृपश्री-प्रेप्सासमीरेण भवन्ति तेऽपि ॥६८॥

लोभार्दितः किं न करोति कष्टं लोभाऽऽहतः किं न करोति कर्म ?।
करोत्यनर्थं पितृ-बान्धवानामप्याशु लोभच्छुरिकाहताक्षः ॥६९॥

संक्लिश्य ये निष्करुणं प्रजातो धनं गृहीत्वा पुपुषुः स्वकोशम्।
भयङ्करं भूरि विधाय युद्धं प्रादर्शि यैश्च प्रलयावभासः ॥७०॥

लोभार्दितास्तेऽपि हि मृत्युकाले न किञ्चिदादातुमलंबभूवुः।
एकाकिनो रङ्कमुखाः प्रयातास्तस्मात् किमर्थं विदधीत लोभम् ?
॥७१॥ युग्मम्।

केनापि सार्धं न गता धरेयं लोभेन ताम्यन्ति वृथैव मन्दाः।
विवेकमाधाय विचार्यते चेत् सन्तोष एव प्रतिभाति सौख्यम् ७२॥

न कर्तुमुद्योगमियं न वार्त्ता परन्तु लोभोत्थविकल्पधूमैः।
मनः सदा श्यामतया वृथैव कार्यं गृहस्थैरपि हन्त! कस्मात् ॥७३॥

कृते प्रयासे प्रचुरेऽपि यन्न संसिद्धिमाप्नोति समीहितोऽर्थः।
सङ्क्लिश्यते तेन, परं विचार्यं यदस्मदीयं न हि तत् परेषाम्* ॥७४॥

बहुप्रयत्नैरपि नार्थसिद्धिः कस्याप्ययत्नादपि कार्यसिद्धिः।
एतद् ध्रुवं कर्मबलं विचार्याऽनिष्टप्रसङ्गेऽपि न खेदवान् स्यात् ७५॥

क्रोधस्य रोधे प्रशमो बलीयान् मानाय शक्नोति पुनर्मृदुत्वम्।
मायां प्रहन्तुं प्रभुताऽऽर्जवस्य लोभस्य शत्रुः परितोष एकः ॥७६॥

क्रोधादिकाऽऽविर्भवनप्रसङ्गाः प्रागेव सञ्चिन्त्य विमोचनीयाः।
प्रसङ्गसम्प्राप्तकषायतायामुक्तानुपायांस्त्वरया भजेत ॥ ७७ ॥

सञ्जन्येत यथा यथाऽबलतया क्रोधादिभिर्दूषणैः
सञ्चेष्टेत तथा तथा शुभमतिस्त्यक्त्वा प्रमादस्थितिम्।
यः क्रोधादिविकारकारण उपप्राप्ते च नाऽऽक्षिप्यते
प्राप्तुं योगधराधरस्य शिखरं नासौ विलम्बक्षमः ॥ ७८ ॥

---

* अन्त्यदोषेन चतुर्थपादेन पूर्तिः।

